॥ श्रीः ॥

पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीता

# अद्वैतचन्द्रिका

THE

# ADWAITA CHANDRIKA.

A WORK ON

VEDANTA PHILOSOPHY OF SHANKAR

COMPILED BY

PANDIT SUDARSHANACHARYA PUNJABI.





BENARES:

PRINTED AT THE C. P. PRESS CO. LD.

1901.

Price As. 6 per copy.]

[मूल्यमाणकषट्कम् ।=)

॥ श्रीः ॥

पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीता

# अद्वैतचन्द्रिका

THE

# ADWAITA CHANDRIKA.

A WORK ON

VEDANTA PHILOSOPHY OF SHANKAR

COMPILED BY

PANDIT SUDARSHANACHARYA PUNJABI.



BENARES:

PRINTED AT THE C. P. PRESS CO. LD.

1901.

॥ श्रीः ॥

# अद्वैतचन्द्रिकाया विषयसूचनिका।

इति ।

१९५८
नागबाणनिधिब्रह्मवत्सरेऽद्वैतचन्द्रिका ।
सुदर्शनसमाख्येन मया काश्यां विनिर्मिता ॥
हृदुत्पलानि पुष्टानि निर्विशेषार्थपाथसि ।
विकसन्त्यनया मन्येऽद्वैतचन्द्रिकया मम ॥

॥ श्रीः ॥

॥ श्रीहरये नमः ॥

॥ श्री १०८ श्रीमद्गुरुप्रवरपदारविन्दाभ्यां नमो नमः ॥

# अथाद्वैतचन्द्रिका ।

निराकारं शुद्धं विगलिततमः प्रान्तिकतमं
यदागीतं वेदैस्तदपि तनुमद् भाति बहुशः ।
तमालश्रीश्यामं व्रजजनिमनोगोरसहरं
गजाय प्रधावन्नटवरवपुर्भाषितमतः ॥ १ ॥
अद्वैतनीतिसिद्धान्तचातुरी चपला मम ।
पूर्वपक्षतयाऽद्वैतचन्द्रिकां तनुते मुदा ॥

१। सकलेषु शास्त्रेषु मीमांसाद्वयमेव प्रधानं वेदवाक्यतात्पर्यनिरूपणपरत्वात्तत्रापि ब्रह्ममीमांसायाः प्राधान्यं मोक्षोपकारित्वान्मोक्षस्य च सकलपदार्थनिटिलकोटीरत्वात्। वेदान्तवाक्यानि च 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादीन्यखण्डार्थपराण्येवेत्यद्वैतसिद्धान्तस्तत्र-संसर्गागोचरप्रमितिजनकत्वमखण्डार्थत्वम्। सर्वेषु लक्षणवाक्येष्वस्य संभावित्वात्। न च-नित्यःसंबन्धः समवाय इत्यादिषु लक्षणवाक्येष्वव्याप्तिः, एतस्यापि समवायस्वरूपमात्रप्रतिपादकत्वात्। तथा च संसर्गागोचरब्रह्मस्वरूपमात्रविषयकप्रमितिजनकत्वात् 'सत्यंज्ञानमनन्तं ब्रह्म'इत्यादिवाक्यानामखण्डार्थता ज्ञेया।

तदुक्तम्—'संसर्गासंगिसम्यग्धीहेतुता या गिरामियम्।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता' इति।

ननु यथा नीलमुत्पलं पीतो घट इत्यादौ सामानाधिकरण्यसत्त्वेपि विशिष्टार्थबोधकत्वमङ्गीक्रियते तथा 'सत्यं ज्ञानमनन्तं ब्रह्म'इत्यादावपि ब्रह्मणि सत्यत्वादिधर्मवैशिष्ट्यबोधकत्वात्संसर्गपरत्वमेवास्तु। इति चेन्न। सत्यादिपदानि किं धर्ममात्रबोधकानि किं वा तत्तद्धर्मविशिष्टबोधकानि न तावद्धर्ममात्रबोधकानि-सत्यत्वादिधर्माणामनेकत्वादेकार्थत्वाभावप्रसङ्गात्। सामानाधिकरण्ये चैकार्थत्वमेव सर्वसंमतम्।

न चापि विशिष्टबोधकानि विकल्पासहत्वात् तथाहि- सत्यादिपदानि किं क्रमेण विशिष्टबोधकानि किं वा युगपदेव नाद्यः-अनेनैव पदेन प्रथमं विशिष्टं बोधनीयं नानेन पदेनेत्यत्र विनिगमनाविरहात् । किं चैकपदप्रतिपन्नस्य विशिष्टस्य द्वितीयपदं यदि स्वोपस्थापितेन विशिष्टेनैक्यं बोधयति तदा विशेष्यांशयोरैक्यमिव विशेषणांशयोरप्यैक्यं स्यात् । तथा च सकलपदैरेकाकारपदार्थप्रतिपादनप्राप्त्या पदानां पर्यायत्वं निष्फलत्वं च तेन स्यात् । एकेनैव पदेन तथाकारबोधनात् ।

यद्येकपदप्रतिपन्नस्य विशिष्टस्य द्वितीयपदं विशेषणांतरान्वयं प्रतिपादयति तदा विशेषणान्तरस्य विशेष्येऽन्वय इव विशेषणेप्यन्वयः स्यादिति विरोधः । न हि विशेषणानां परस्परान्वयो युक्तः 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति न्यायात् ।

न चापि द्वितीयः-असंभवात् । यथा यथा हि पदानि स्मृतान्युच्चारितानि वा तथा तथैव तेषामर्थबोधकत्वात् । संभवेपि विशेषणानामैक्यप्रसङ्गो दुर्वारः । इदमैदम्पर्यमत्र- यद्येकेन पदेन विशेष्यमात्रं वा विशिष्टं वा बोध्यतेऽन्यैः सकलपदैर्विशेषणान्वयमात्रं बोध्यते तदोक्तरीत्यैव विनिगमनाविरहः । अथैतद्दोषपरिजिहीर्षया सकलैः पदैर्विशिष्टमेव बोध्यते तदैकस्यैव विशिष्टस्य बोधनेऽन्यपदानां पर्यायत्वं तेन च वैफल्यं विशेषणानामैक्यं च प्राप्तम् । यदि भेदेन विशिष्टं बोध्यते तदा सामानाधिकरण्यवैफल्यम् । एकार्थबोधकत्वेनैव सामानाधिकरण्यस्य चारितार्थ्यात् । तस्मात्सिद्धं स्वरूपमात्रबोधकत्वं सत्यादिपदानाम् ।

२ । सत्यादिपदानां संसर्गागोचरप्रमितिजनकत्वेपि तत्त्वमस्यादिवाक्येषु लक्षणाश्रीयते । यथा सोयं देवदत्त इति वाक्य उभयपदलक्षणास्ति तथाहि--तच्छब्देन पूर्वकालोपलक्षितस्येदंशब्देन चैतत्कालोपलक्षितस्योपस्थितिर्भवति तत्रातीतवर्त्तमानकालोपलक्षितस्यैक्याऽसंभवात् सोयमितिपदे शुद्धं देवदत्तमात्रमुपलक्षयतः । एवं तत्त्वमसीति वाक्ये तत्पदवाच्यस्य भगवतो ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म, 'यः आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' 'एष सर्वभूतान्तरात्मा

ऽपहतपाप्मा दिव्यो देव एको नारायणः' 'यः सर्वज्ञः सर्ववित्' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिना सर्वज्ञत्वादिकं श्रूयते। एवं त्वंपदवाच्यस्य जीवस्य 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः' अजो ह्येको जुषमाणोनुशेते' 'ज्ञाज्ञौ द्वावजावीशाऽनीशौ' इत्यादिनाऽसर्वज्ञत्वादिकं श्रूयते तयोश्च जीवब्रह्मणोः परस्परमत्यन्तप्रत्यनीकविशेषणविशिष्टयोरैक्यासंभवात् तत्त्वं पदे विशेषणांशमपहाय शुद्ध चैतन्यमेवोपलक्षयत इति संभवत्येवैक्यम्।

यथा ह्येकजातीयस्य चीनांशुकस्य हरिद्राकाश्मीराभ्यामनुरञ्जितत्वकाले न संभवत्यैक्यं हरिद्राकाश्मीररूपोपाधेर्भेदात्, क्षालिते च रागे संभवत्येवैक्यं उभयस्यापि चीनांशुकस्य समानजातीयत्वात्, ऐक्यादित्यर्थः। एवं जीवब्रह्मणोरप्यैक्यं बोध्यते तत्त्वमस्यादिवाक्येन।

तदुक्तम्-'सोयमित्यादिवाक्येषु विरोधात्तदिदंतयोः।
त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा १।
मायाऽविद्ये विहायैवमुपाधी परजीवयोः।
अखण्डं सच्चिदानन्दं परं ब्रह्मैव लक्ष्यते' २ इति।

३। तच्च ज्ञानमपरोक्षात्मकं शब्दस्याप्यपरोक्षप्रमितिजनकत्वात्। यथा दशमस्त्वमसीत्युक्ते दशमोस्मीति शब्दत एवापरोक्षप्रमितिः स्वविषयोत्पद्यते। एवं तत्त्वमस्यादिवाक्यानामप्यपरोक्षात्मकप्रत्ययजनकत्वमवसेयम्। ननु दशमस्त्वमसीत्यत्रेन्द्रियस्यापि सत्त्वात् तस्यैव कथं नापरोक्षप्रमितिजनकत्वमिति चेन्न, तत्र शब्दस्यापि सत्त्वेन विनिगमनाविरहात्।

तस्माच्छाब्दादेवापरोक्षब्रह्मज्ञानान्मोक्ष इति सिद्धम्। ब्रह्मज्ञानादेव मोक्ष इति सर्वसंमतम्। ब्रह्म च नेन्द्रियप्रत्यक्षगोचरः। शाब्दादपि यदि परोक्षज्ञानान्मोक्षःस्यात्तदा 'आवृत्तिरसकृदुपदेशात्' इत्यादिसूत्रवैयर्थ्यं स्यात् शाब्दपरोक्षज्ञानस्याऽऽवृत्त्यभावेपि संभवात्। अत एव वाक्यकारेण पूर्वपक्षतयोक्तम् 'सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्' इति। एवं ह्यगत्या क्वचिच्छाब्दज्ञानस्यापरोक्षत्वं मन्तव्यम्। मानसमपरोक्षज्ञानं तु शाब्दस्यैवापरोक्षज्ञानस्य परमावस्था श्रवणमननानन्तरं शाब्दापरोक्षप्रमितिविषयस्यैव निदिध्या-

सनविषयत्वात् । यदि शब्देनापरोक्षप्रत्ययो न स्यात्तदा किं विषयकं निदिध्यासनं स्यात्? । श्रुतिरप्याह 'ब्रह्मवेद ब्रह्मैव भवति' 'तमेव विदित्वा अति मृत्युमेति नान्यः पन्था विद्यते अयनाय' ।

४ । ज्ञानं च स्वयंप्रकाशमेव ज्ञानस्यानुव्यवसायभास्यत्वे दुर्वारानवस्था स्यात् । नन्वऽनुव्यवसायकक्षायां बिश्रमान्नास्त्यनवस्थेति चेन्न, अनुव्यवसायभानं केन भवेदिति वक्तव्यत्वात्। यद्यनुव्यवसायभानापेक्षानास्तीत्युच्यते तदा व्यवसायस्यापि भानापेक्षा नास्ति स्वयंप्रकाशत्वात्। व्यवसायभानापेक्षाऽस्ति नास्ति चानुव्यवसायभानापेक्षेत्यत्र विनिगमनाभावात् । यदि तेनैवानुव्यवसायेन तस्यानुव्यवसायस्य भानं स्वीक्रियते तदा त्वयाप्यनुव्यवसायस्य स्वयंप्रकाशत्वमङ्गीकृतमिति व्यवसायस्यैव स्वयंप्रकाशत्वं भवतु कृतमनुव्यवसायपर्यन्तधावनेन। किंचानुव्यवसायेनानुव्यवसायभाने कर्मकर्तृविरोधः । व्यवसायेन व्यवसायभानेपि कर्मकर्तृविरोध इति चेन्न स्वयंप्रकाशत्वस्वीकारात् । किं च ज्ञानस्यापि ज्ञानान्तरभास्यत्वे दीपस्यापि दीपान्तरभास्यत्वं स्यान्नचैवमस्ति । अपि च ज्ञानं ह्यात्मस्वरूपं ज्ञानस्य परप्रकाश्यत्व आत्मनोपि परप्रकाश्यत्वं स्यादिति सकललोकान्धत्वप्रसङ्गः ।

तदुक्तम्–'चिद्रूपत्वादकर्मत्वात्स्वयं ज्योतिरितिश्रुतेः ।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षम': इति ।

ननु 'अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मना ज्ञातुमर्हति १'

इति चेन्न, विषमोयं दृष्टान्तः । समानयोरेवोपमानोपमेयभावो भवति यथा मुखचन्द्रयोः । न हि मुखमोदकयोरुपमानोपमेयभावः । ज्ञानस्य तु प्रदीपेनोपमानोपमेयभावोस्ति यथा दीपो घटादिकं प्रकाशयन् स्वयमपि प्रकाशते तथा ज्ञानमपीति ज्ञेयम् । तथा च

मणिदीपो यथात्मानं प्रकाशयति चात्मना ।
स्वांशेन ज्ञानमप्येवमात्मानं ज्ञातुमर्हति १ ॥

मयाप्येवं सुपठत्वात् ।

तदुक्तम्–'तदेवापश्यतां सर्वशून्यत्वाद्बिभ्यतां सताम् ।
गतिः स्वयं प्रकाशत्वादृते नान्योपलभ्यते' ॥

ज्ञानं वेद्यं वस्तुत्वाद्घटवदित्यत्र तु जडत्वमेवोपाधिः । तच्च ज्ञानं नित्यं विनाशाप्रतियोगित्वात् । ननु कालानवच्छिन्नत्वं हि नित्यत्वं, संवेदनस्य कालानवच्छिन्नत्वे च तद्विषयस्यापि कालानवच्छेदेन नित्यत्वं स्यादिति चेन्न, न हि लोहदामनि निबध्यमानानामश्वमाहिषादीनां विनाशे दामविनाशः प्रसज्यते, न वा दामसद्भावेन तत्र बध्यमानाश्वमाहिषादीनां सद्भावः प्रसज्यते । किं च ज्ञानस्य विनाशित्व आत्मन एव विनाशित्वमाशंसितं स्यात् । अपि चान्तःकरणवृत्तिं पक्षीकृत्यालपसीति तस्या अनित्यादिकं स्वीकृतमेवेति सिद्धसाधनम् ।

साक्षिचैतन्यं तु न वस्तुयथार्थरूपं विषयीकरोति, अपि त्वज्ञानमेव । अन्यथा तस्य सदैव सत्त्वाच्छुक्तिरजतादेरवभास एव न स्यात् स्वरूपचैतन्यमपि नाविद्यानिवर्त्तकमविद्यायास्तदाश्रयत्वात्, अन्यथा स्वरूपचैतन्यस्य सदैवसत्त्वादविद्याया नित्यनिवृत्तेरेवस्यादिति तत्त्वमस्यादिवाक्यजनितब्रह्माकारचित्तवृत्तिफलकारूढचैतन्यं तच्छायोपेता वा चित्तवृत्तिरविद्यानिवर्त्तिका ।

५ । ज्ञानस्य कर्माङ्गत्वमपि नास्ति जातब्रह्मज्ञानस्य कर्मफलेप्साऽभावात् प्रत्युत ज्ञानस्य कर्मविरोधित्वात् । ज्ञानस्यैव केवलस्य मोक्षसाधनत्वं न तु कर्मणां कर्मसमुच्चितज्ञानस्य वा 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इत्यादिश्रुतेः । कर्मणां तु ज्ञानोत्पत्तावुपयोगः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इत्यादिश्रुतेः । विविदिषाया एव प्रत्ययार्थत्वेन प्राधान्यात्तत्रैव कर्मणामुपयोगस्यौचित्यात् । अयन्था मोक्षस्य सातिशयत्वमनित्यत्वं च स्यात् 'तद्यथेह कर्मचितो लोकः क्षीयते' 'अन्तवदेवास्य तद्भवति' न ह्यध्रुवैः प्राप्यते ध्रुवं कर्मभिः' इत्यादिश्रुतेः ।

संसारनिवृत्तिर्ब्रह्मप्राप्तिश्च मोक्षस्तत्र संसारस्य मिथ्यात्वान्निवृत्तप्रायत्वमेव ब्रह्मणोप्यात्मस्वरूपत्वात् प्राप्तत्वमेवेत्युभयत्रात्यमावरणमेव ज्ञानेनापाक्रियत इति ज्ञानस्य मोक्षसाधनत्वेपि न मोक्षानित्यत्वशङ्काप्रसक्तिः । वस्तुतस्तु ज्ञानस्यापि मोक्षं प्रति प्रयोजकत्वमेव । प्रपञ्चमिथ्यात्वं च 'नेह नानास्ति किं चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादि श्रुतिसिद्धम् । सदसद्भ्यां निरूपयितुमशक्यत्वाच्च ।

तदुक्तम्-'सर्वेषामपि भावानामाश्रयत्वेन संमते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता' इति ।

यदा हि घटादीनां स्वोपादानेष्वपि सत्ता नास्ति तदान्यत्र सत्ता स्यादित्यस्य का वार्ता । प्रतीतिस्तु प्रातिभासिकत्वेन व्यावहारिकत्वेनापि च संभवतीति न प्रतीतिमात्रेण सत्यत्वापत्तिरन्यथा शुक्तिरजतादीनामपि सत्त्वं स्यात्। तत्र बाधोपि भवतीति न सत्त्वमिति चेन्न, अत्रापि ब्रह्मैकत्वज्ञानेन बाधो भवत्येव। शुक्तिरजतादिवदज्ञानेनैव प्रपञ्चस्य भासमानत्वात् ।

६ । अज्ञानमपि भावस्वरूपमेव न तु ज्ञानाभावः। अज्ञानस्य ज्ञानाभावत्वे प्रपञ्चोपादानत्वं न स्यात् । न ह्यभावस्योपादानकारणता संभवति, अन्यथा घटाभावस्यापि कंचित्प्रत्युपादानकारणता स्यात्। किंच ज्ञानस्यात्मस्वरूपत्वाज्ज्ञानाभावेनात्माभाव एव प्रसज्येत । न त्वात्मनः कदाचिदप्यभावो भवति नित्यत्वात्तस्य 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः ।

ननु घटज्ञानेन पटज्ञानं नष्टमित्यादिव्यवहाराज्ज्ञानस्यापि नश्यत्वप्रतीत्या को नाम दोषोऽज्ञानस्य ज्ञानाभावस्वरूपत्व इति चेन्न, अन्तःकरणवृत्तौ ज्ञानत्वोपचारमूलत्वादुक्तव्यवहारस्य । किंच यदि ज्ञानस्यापि नाशः स्यात्तदा तव मतेपि पदार्थमात्रं ज्ञानेनैव ज्ञायते न तु ज्ञानं विनान्यः कोप्युपलब्धेरुपायोस्ति तथा च ज्ञानस्यैव नष्टत्वात् तदभावः केन कथं ज्ञायेत ? ।

यदि ज्ञानान्तरेण तदा तदभावः केन कथं ज्ञायेत । एवं धावता त्वयानवस्थादोषाद्बिभ्यता क्वचिदपि ज्ञाने नित्यत्वं गलेपतितन्यायेनावश्यं स्वीकार्यमेव । तदुक्तं मया शतके—

अनुभवस्तु सदातन उच्यत उदयनाशविहीनविलोकनात् ।
यदि च नश्यति तार्किक तत्कथं ह्यवगतं विरहादपि संविदः । इति ।

तस्माज्ज्ञानस्य नित्यत्वान्न तदभावोऽज्ञानम्। नाप्युक्तमज्ञानं वृत्तिलक्षणज्ञानस्याभावः प्रपञ्चोपादानकारणत्वात् । वृत्तिलक्षणं तु ज्ञानं नश्यत्येव ।

अन्तःकरणस्य यो विषयाकारेणपरिणामः स वृत्तिरित्युच्यते ।

तदुक्तम्–'मूषासिक्तं यथाताम्रं तन्निभं जायते तथा।
रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम्'१ इति।

सा च वृत्तिर्द्विविधा–चक्षुरादिसम्बन्धेन चक्षुरादिद्वारान्तःकरणस्य घटाद्याकारेण परिणामरूपा। शुक्तिरजतादौ चक्षुरादिसम्बन्धाभावाद्रजताकाराऽविद्यावृत्तिर्द्वितीया। केषामपि मतेन्तःकरणादीनामपि केवलसाक्षिभास्यत्वाभावाद्बहिरिन्द्रिययोग्यत्वाभावाच्चान्तःकरणतद्धर्मादिविषयाऽहमाद्याकाराप्यन्तःकरणस्य तृतीया वृत्तिरभ्युपगम्यते। केषामपि मते तृतीयैषा वृत्तिर्नास्त्येवान्तःकरणतद्धर्मादीनां केवलसाक्षिभास्यत्वात्।

वृत्यन्तरोत्पत्तिपर्यन्तं पूर्वविषयाकारा वृत्तिस्तिष्ठत्येव, न तु तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं वृत्तीनाम्। अन्यथा घटोयं घटोयमित्यादिधारावाहिकबुद्धिरसिद्धिर्न स्यात्। प्रत्युत द्वितीयाया घटोयमित्याकारकबुद्धेरनुभूतविषयत्वात् स्मृतित्वं स्यात् तत्प्रथममपि घटोयमित्याकारकबुद्धेर्जातत्वादेव। न हि घटोयं घटोयमित्यत्र द्वितीयबुद्धेः स्मृतित्वं प्रसिद्धम्। तस्मान्न तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं वृत्तीनां किं तु विषयान्तराविषयकोत्पन्नबुद्धिजन्यध्वंसप्रतियोगित्वं किं वा स्वभिन्नान्तःकरणयोग्यधर्मजन्यध्वंसप्रतियोगित्वं ज्ञेयम्।

७। रजतमिदामित्याविद्यावृत्तौ शुक्तावनिर्वचनीयमेव रजतमुत्पद्यते सदसद्भ्यां निर्वक्तुमशक्यत्वात्। न सन्नेदं रजतमितिबाधकज्ञानेन शुक्तिस्वरूपानुकूलेन बाध्यमानत्वात्। नाप्यसत् प्रतीतिविषयत्वात्। नापि रजतत्वधर्ममात्रसंसर्गपुरस्कारेण प्रतीती रजतत्ववदितिप्रतीतेरभावात्। रजतमिदमिति वस्तुसामानाधिकरण्येन प्रतीतेश्च। आपणस्थरजतसमवेतरजतत्वधर्मस्य शुक्ते रजतत्वेन प्रतीतौ पुरस्कारकत्वाभावाच्च। न च यथार्थमेवैतज्ज्ञानम्–ज्ञानयाथार्थ्यस्य विषययाथार्थ्यव्याप्यत्वेन रजतोपलब्धिप्रसङ्गात्। न च क्षणिकमतानुसारेण शुक्तिरेव रजतज्ञानसमये रजताकारेण परिणमत इति युक्तम्। अयमत्रदोषः—यदि समानरूपतयापरिणाम उच्यते तदा शुक्तेः शुक्तिरूपेणैव परिणामः स्यान्नतु रजतरूपेण। यदि प्रथमं शुक्तित्वेनानुभव एव न जात इति कथं शुक्तिरूपेण परिणामः स्यादित्युच्यते तदा प्रथमं रजतत्वेनाप्यनुभवो न जात इति रजतरूपेणापि परिणामः

कथमुच्यते विनिगमनाविरहाल्लोष्ठरूपेणैव कथं न परिणमते। कथं चिद्रजतरूपेण परिणामव्युत्पादनेपि पुनर्बाधकज्ञानानन्तरमपि रजतरूपेणैव परिणामः स्यात् समानरूपपरिणामस्वीकारात्। विसदृशपरिणामस्वीकारे च बाधकज्ञानानन्तरं शुक्तिरूपेण परिणामे जातेपि तदनन्तरक्षणेप्यन्यथा परिणामः स्यान्नचैवमुपलभ्यते। किं च रजतरूपेण परिणामोपि न संभवति विसदृशपरिणामस्वीकारपक्षे विसदृशता च केनापि पदार्थेन सत्रा वक्तव्या रजतस्य येन शुक्तित्वादिरूपेण साकं विसदृशता तस्यानुभव एव पूर्वं न भवति। यस्य चेदंत्वरूपस्यानुभवो भवति तस्य विसदृशत्वं नास्ति। इदंत्वस्य सकलपदार्थसाधारणतया कथमिव रजतेन समं विसदृशता स्यात्। तस्मात्तत्रानिर्वचनीयमेव रजतमुत्पद्यते तच्च प्रतिभासकालमात्रे वर्त्तत इति प्रातिभासिकमित्युच्यते। तस्य चाधिष्ठानविषयिकाऽविद्यैवोपादाननिदानम्। यावदविद्यं विलासात्। दोषादयस्तु निमित्तानि। नेदं रजतमिति बाधकज्ञानेनाधिष्ठानाज्ञानस्यैव विलयो भवतीति तत्कार्यस्य रजतस्य स्वयमेव विलयो न तु प्रयासान्तरेण। न हि कपाले नष्टे घटनाशाय प्रयासान्तरं क्रियते। कार्यस्य स्वकारणनाशानुविनाशित्वनियमात्।

८। शुक्तिरजतवत्सर्वेषामात्मव्यतिरिक्तानां विषयाणां प्रातिभासिकत्वाविशेषेपि प्रपञ्चे कार्यकारित्वाद् व्यावहारिकत्वमप्युच्यते तत्र घटपटादयः सर्वे पदार्थाः परस्परं व्यावहारिकभेदभिन्ना एवान्योन्याभावभाविता इति यावत्। तद्विषयकान्तःकरणवृत्तीनां भेदेपि तेषु सर्वेषु वर्तमानं प्रधानं ज्ञानं त्वेकमेव यथा तर्कमत एकस्याप्याकाशस्य घटमणिकमल्लिकाद्युपाधिभेदेनैव भेदो न तु वास्तव एवं वेदान्तमतेपि घटपटादिविषयभेदमात्रेण ज्ञानस्यापि भेदः स्वरूपतस्तु ज्ञानमेकं नित्यं च। सुषुप्त्यादिष्वपि ज्ञानं वर्तत एव नित्यत्वात् सुप्तोत्थितस्य 'सुखमहमस्वाप्सम् न किं चिदवेदिषम्' इतिपरामर्शदर्शनाच्च। जाग्रत्स्वप्नसुषुप्तय इत्यवस्थात्रयमुच्यते। अवस्थात्रैविध्येन विषयस्यापि त्रैविध्यम्। सुषुप्तौ परमानन्द एव विषयः। स्वप्ने दृश्यमानो विषयः सर्वः प्रातिभासिक एव तथापि कस्य चित् व्यावहारिकवत्प्रतीतिर्भवति कस्य चित् प्रतिभासिकवत्प्रतीतिर्भवति। जाग्रति व्यावहारिका घटादयः, प्रातिभासिकाः शुक्तिरजतादयः।

९। प्रकारान्तरेणावस्था द्विविधा परमार्थावस्था व्यवहारावस्था च। आद्या-ब्रह्मप्राप्तिरेव। अपरा-आपामरपण्डितसाधारणी 'पश्वादिभिश्चाविशेषात्' इति भाष्योक्तेः।

तत्र व्यवहारदशायां द्रव्यगुणकर्माभावसादृश्यशक्तय इति षट् पदार्थाः। द्रव्याणि तत्र प्रथमं माया ततो महतत्त्वमहंकारो दशेन्द्रियाणि, पंञ्च सूक्ष्मभूतानि-शब्दस्पर्शरूपरसगन्धाख्यानि, पञ्च महाभूतानि-वियद्वायुतेजोजलपृथिव्याख्यानि, कालो दिङ् मनः, आत्मा ज्ञानं चैकमेव द्रव्यम्। लोकशरीरप्राणादीनामुक्तेष्वेव द्रव्येषु यथायथमन्तर्भावः।

तमोपि द्रव्यान्तरमेव न तु प्रकाशाभावस्तस्य प्रकाशाभावत्वे मध्यंदिनवर्तिन्यपि नभोमणौ प्ररूढतरं प्रकाशमानेपि तम उपलभ्येत प्रकाशस्थले। किं च यदि तमः प्रकाशाभावः स्यात्तदा यथा रूपवतां घटादीनामभाव आलोकसहकृतविलोचनवेद्यस्तथा तमसोपि रूपवत्प्रकाशाभावत्वादालोकसहकृतविलोचनवेद्यत्वं स्यात्। तस्य च तमसो मेघमण्डलादुत्पत्तिः। तदुक्तम्-

'न रूपं रूपवत्त्वेन क्रियावत्त्वान्न कर्म तत्।
न शेषः समवायित्वात् तमोऽन्यद् द्रव्यमिष्यते' इति।

वार्त्तिककारैश्चोक्तम्-

'तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति' इति।

'तमः ससर्ज भगवान्' 'नासीत्तमो ज्योतिरभून्न चान्यत्' यस्य तमः शरीरम्' इत्यादिश्रुतेश्च तमसो भावत्वं द्रव्यत्वं च सिद्धम्।

गुणाश्च सत्त्वरजस्तमांसि, शब्दस्पर्शरूपरसगन्धाः, संख्या परिमाणं संयोगो विभागश्च, परत्वापरत्वे, सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वं लघुत्वं द्रवत्वं काठिन्यं, स्नेहो रूक्षता, वृत्तिलक्षणं ज्ञानं धर्माधर्मौ संस्कारः धृतिः ह्रीरित्यादयो ज्ञेयाः। संदेहनिश्चयश्रद्धादीनां वृत्तावन्तर्भावः। कर्म च पञ्चधा तार्किकैरेवोक्तम्-

'उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च' इत्येव युक्तम्।

अभावश्चाधिकरणात्मक एव। अन्यथा प्रपञ्चाभावस्याधिकरणानात्मकत्वे द्वैतापत्तिः स्यात्। न च भूतले घटाभावो भूतलस्वरूपमृतेऽन्यदुपलभ्यते। विस्तरश्चानुपलब्धिप्रकारणे द्रष्टव्यः। सादृश्यस्य पदार्थान्तरत्वमुपमानप्रकरणे द्रष्टव्यम्।

अस्ति च शक्तिः पदर्थान्तरमन्यथा ज्वालाजटिलेपि पावके प्रतिबन्धकमणिसद्भावमात्रेण यद्दाहो न भवति तत्र का नाम युक्तिरनुभवानुरोधिनी प्रसरेत?। न च प्रतिबन्धकाभावस्योत्तेजकाभावविशिष्टप्रतिबन्धकसामान्याभावस्य वा दाहं प्रति हेतुतेति वाच्यम्, एवं ह्युक्तकारणस्य जलेपि सत्त्वात्पावकाभावेपि जलादौ दाहकार्योपलब्धिः स्यात् कारणसत्त्वे कार्यसत्त्वनियमात्। ननु दाहं प्रति दाहसामग्र्याः कारणत्वमस्ति न तु केवलस्योक्ताभावस्य तथा च दाहसामग्र्यां पावकस्यापि प्रवेशोस्तीति कथं पावकाभावे दाहः स्यादिति चेत्तर्ह्यदृष्टादीनामिव शक्तेरपि सामग्र्यां प्रवेशं मनुतां किं तेऽपकृतं शक्त्या यत्तस्याः समूलोच्छेदाय प्रवृत्तोसि। किं चापामरप्रसिद्धं पावके दाहसामर्थ्यं यथा मुनिनिकरवन्दितसुरधुनौ पातकिपावनसामर्थ्यं भगवति जनार्दने च संसारसागरोत्तारणसामर्थ्यमिति। श्रुतिश्च स्फुटं शक्तिं प्रतिपादयति-'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति। अभावमात्रस्य हि कारणत्वं नास्तीति का कथा प्रतिबन्धकाभावस्योत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य वा कारणत्वे। अभावस्य हि कारणत्वे तस्य सर्वत्र सुलभतया सर्वत्र सर्वकार्यप्रसक्तिः स्यात्।

न तु सामान्यमपि पदार्थान्तरम्-यथा सामान्यस्य गोत्वादेः स्वरूपेणैव सत्त्वं तथा द्रव्यादीनामपि स्वरूपेणैव सत्त्वं भवतु कृतं तत्र सामान्यसमवायप्रयुक्तसत्त्वपरिकल्पनेन। अन्यथा विनिगमनाविरहात् सामान्येपि सामान्यसमवायस्वीकारे दुर्वारैवानवस्था स्यात्। किं च-नित्यत्वेसत्यनेकसमवेतत्वं हि सामान्यत्वं त्वयोच्यते तत्र ब्रह्मभिन्नपदार्थमात्रस्य नित्यत्वं नास्ति समवायास्वीकारात्समवेतत्वमपिन संभवति। किं त्ववयवसंस्थानमेव सामान्यमित्युच्यते।

न च विशेषोपि पदार्थान्तरम्-यथा विशेषाणां स्वरूपेणैव पर-

स्परं भेद एवं नित्यद्रव्याणामपि स्वरूपेणैव परस्परं भेदसंभवाद् विशेषपदार्थापेक्षापि नास्ति।

नापि समवायः पदार्थान्तरम्-यथा समवायः स्वरूपेणैव संबद्धस्तथा गुणकर्मसामान्यानामपि स्वरूपतो द्रव्येण सम्बन्धसंभवे समवायापेक्षापि नास्त्येव। अन्यथा समवायेपि विनिगमनाविरहात् सम्बन्धान्तरस्वीकारे स्फुटैवानवस्था। तदुक्तं सूत्रकृता '[1]समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति।

यथासंभवं गुणेष्वपि गुणा उपलभ्यन्ते तथा हि द्वे रूपे द्वौ रसाविति प्रतीतिर्भवति। न च द्रव्यगतसङ्ख्यादीनां गुणे प्रतीतिरिति वाच्यम्-अत्राप्यन्यथाख्यातिस्वीकारप्रसङ्गात्, अन्यत्र समवेतस्यान्यत्र प्रतिभासासंभवाच्च। न चानवस्था सङ्ख्यादौ सङ्ख्यादीनामस्वीकारात्। यथा संयोगसंबन्धे समवायसंबन्धान्तरस्वीकारेपि समवाये समवायास्वीकारान्नानवस्थेति त्वयोच्यते तथा।

यच्च सुवर्णस्य तेजस्त्वमुच्यते तत् संकुचितप्रतिभस्य प्रलापः। तथा हि-सुवर्णस्य तेजस्त्वं ह्यसति प्रतिबन्धकेऽत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन साध्यते, अन्यत्र पार्थिवपदार्थे रजतादावत्यन्तानलसंयोग उच्छिद्यमानद्रवत्वाधिकरणत्वात्। एवं हि पारदस्यानलचयेऽसतिप्रबन्धके स्थितिरेव न भवतीति तस्यापि पार्थिवत्वं न स्यात्। न चान्यत्रान्तर्भावो युज्यते, क्व चिदपि पदार्थेऽसति प्रतिबन्धकेग्निसंयोगादुत्पतनासिद्धेः। न च नैवोत्पतति पारद इति वाच्यम्, उत्पतनाभावे रजतादिभस्मवत् पारदभस्मोपलम्भप्रसंगात्, न चोपलभ्यते। एवं सर्वविलक्षणत्वात् पारदस्यापि पदार्थान्तरत्वमेव स्यात्। अभ्युपगम्यते च पदार्थान्तरत्वमपि पारदस्य पारदरसेश्वरवादवादिभिः।

---

१ "यथैव ह्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यते, एवं समवायोपि समवायिभ्योत्यन्तभिन्नः सन् समवायलक्षणेनान्येनैव संबन्धेन समवायिभिः संबध्येतात्यन्तभेदसाम्यात् ततश्च तस्य तस्यान्योन्यः संबन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत"। "तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था" इत्येवमिदं सूत्रमद्वैतभाष्यकारैर्व्याख्यातम्।

एवं कर्पूरपिण्डस्य समीरणसंपर्कादुत्पतनमन्वयव्यतिरेकसिद्धं न चैतादृशमुत्पतनमन्यत्रसिद्धं यत्रान्तर्भावः स्यादिति कर्पूरस्यापि पदार्थान्तरत्वं स्यात् । न च सर्व एव पदार्थाः परिणामिनः का कथा कर्पूरस्येति वाच्यम्, यथा हि प्रतिदिनं व्यक्तमेवापचीयमानत्वं कर्पूरपिण्ड उपलभ्यते न तथा घटादाविति हेतोः ।

अपि चान्यत्र क्व चिदपि सन्निधानमात्रेण दाहप्रतिबन्धकत्वं नोपलभ्यते इति प्रतिबन्धकमणेरपि पदार्थान्तरत्वं स्यत् । किमधिकेन सर्वत्रैव घटपटादिषु कोप्यसाधारणः स्वभाव उपलभ्यत एवेति घटपटादीनामपि पदार्थान्तरत्वं स्यात् ।

किं च सुवर्णस्यासतिप्रतिबन्धकेऽत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन तेजस्त्वसाधने प्रकाशवत्त्वमेवोपाधिः । तस्माद् यथा पार्थिवत्वेपि घटस्य जलाहरणाद्युपयोगित्वमेव न प्रावरणोपयोगित्वम्, पटस्य प्रावरणाद्युपयोगित्वमेव न जलाहरणोपयोगित्वमिति सर्वत्रासाधारणस्वभावसत्त्वेपि घटपटादीनां पार्थिवत्वमेव, एवं सुवर्णस्याप्यसतिप्रतिबन्धकेऽत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वलक्षणासाधारणस्वभाववत्त्वेपि पार्थिवत्वमेव न तेजस्त्वम् । पार्थिवत्वस्य च गुरुत्वपीतत्वाद्याश्रयत्वादि बह्वनुकूलम् ।

न चान्यत्र पार्थिवपदार्थेऽत्यन्तानलसंयोगेन रूपपरावृत्तिर्दृश्यते कनकेऽत्यन्तानलसंयोगेपि रूपपरावृत्तेरभावान्न पार्थिवत्वमिति वाच्यम्, एवं ह्यत्यन्तानलसंयोगे नीरस्यापि रूपपरावृत्तेरभावात्तेजस्त्वं स्यात् । ननु रूपापरिवृत्तिः पार्थिवत्वाभावे हेतुरिति पार्थिवत्वाभावोस्त्येव नीर इति चेन्न-एवं हि विनिगमनाविरहात् सुवर्णस्य जलत्वमेव स्यात् । न च पीतिमाश्रयत्वान्न जलत्वमिति वाच्यम्, तस्मादेव न तेजस्त्वमित्यस्यापि वक्तुं शक्यत्वात् । किं चात्यन्तानलसंयोगेन दृढानां पार्थिवपदाथानां रूपपरिवृत्तिर्न भवति किं चिदपक्षयो भवतीत्यन्यदेतत् । तेषामपि बह्नौ रूपपरिवृत्तिरवलोक्यते मात्रया श्यामत्वोपलब्ध्येति चेत्कनकेप्यनलसंयोगेन कदा चिच्छ्यामत्वमुपलभ्यत एव ।

किं च सुवर्णस्य तेजस्त्वेऽन्धकारेपि प्रत्यक्षत्वप्रसंगः, किं च तैजसं सत् सुवर्णं वह्निवदात्मानं परं च प्रकाशयेत्, कनकहारहारिण्यो नवनायिका दह्येरन् वन्हिस्पर्शेनेव, कनककोटीरादिनैव गृहप्रकाशे दीपस्यानुपादेयता च प्रसज्येतेति दोषाः। न च वन्हौ वन्हिमध्यव्यापिनी प्रभैव स्वपरप्रकाशिकेति वाच्यम्, स्वपरप्रकाशिकप्रभावत्त्वाभावेनैव सुवर्णस्य तेजस्त्वाभावोपपत्तेः । किं च यथेङ्गालादौ पार्थिवभस्मादिनाऽभिभवे तेजस्त्वं नोपलभ्यते तथा पार्थिवभागाभिभवेन सुवर्णे कथं तेजस्त्वमुपलभ्येत। अन्यथेङ्गालावस्थायामपीङ्गालस्य तेजस्त्वमुच्येतेत्यादि विभावनीयं सुधिभिः। तार्किकमहाशयस्य वेदान्तसूत्रकारेणैव प्रमर्दितं मतमिति द्वितीयाध्यायद्वितीयपादेवलोकनीयम् ।

१०। मनसोपि साक्षिवेद्यत्वमस्त्येव न चेन्द्रियत्वव्याघात ऐन्द्रियज्ञानाविषयत्वात् । किं च मनस इन्द्रियत्वेपि विवाद एव केचिन्मनस इन्द्रियत्वं स्वीकुर्वन्ति केचिन्नापि 'मनः षष्ठानीन्द्रियाणि' इत्यस्य तु 'यजमानपञ्चमा इडां भक्षयन्ति' इति वत्समाधानम्। किं च स्वप्ने मन एव गजाद्याकारेण परिणमते स्वाप्निकगजादिप्रत्यक्षे तत्कारणस्य मनसोपि प्रत्यक्षत्वं प्राप्तमेव। न हि घटप्रत्यक्षे मृत्प्रत्यक्षं कपालप्रत्यक्षं वा न जातमिति शक्यते वक्तुं विदुषा। तदुक्तम्-'मनः प्रत्यक्षमात्मवत्' इति। मनः प्रत्यक्षं कोशत्वादन्नमयकोशवत् । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्च कोशास्तत्रान्नमयकोशादिविविक्तात्मज्ञानेन श्रवणमनननिदिध्यासनैर्दीर्घकालादरनैरन्तर्यसेवितैर्दृढीभूतेन परं ब्रह्म प्रपद्यते ।

यथाश्रुतस्यार्थस्यानुसंधानं श्रवणम्। यथाश्रुतस्यैवार्थस्य श्रुत्यनुकूलयुक्तिभिर्विवेचनं मननम् । श्रवणमननाभ्यां निर्विचिकित्सेर्थे स्थापितस्य मनस एकतानतैव निदिध्यासनम्। तदुक्तम्—

'मूर्तिप्रत्ययसांतत्यमन्यानन्तरितं धियः।
ध्यानं तत्रातिनिर्बन्धो मनसश्चञ्चलात्मनः'। इति

तत्रापि ध्यातृध्यानयोः परित्यागाद् ध्येयैकगोचरो निर्वातसद्मस्थितदीपसदृशं यदा चित्तं भवति स समाधिरित्युच्यते। स एष

संप्रज्ञातः समाधिः । यदा तु ध्येयस्यापि परित्यागादात्ममात्रस्थितिस्तदाऽसंप्रज्ञातः समाधिः । तदुक्तम्-'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति ।

११ । विभागजविभागोपि नास्ति प्रमाणाभावाद् गौरवाच्च । न चाकाशादिविभागजनकस्य कर्मणो द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वं नास्ति, द्रव्यारम्भकसंयोगविरोधिविभागजनकस्य च कर्मण आकाशादिविभागजनकत्वं नास्ति, एकेन कर्मणोभयविभागजननासम्भवादिति द्वितीयादिर्विभागो विभागजः स्वीकार्य इति वाच्यम्-यदा हि कर्मणा वेणुदले द्रव्यारम्भकसंयोगविरोधिविभाग उत्पादितस्तदा तेनैव कर्मणाऽऽकाशादिविभागो नोत्पादित इति तदा ज्ञायेतापि यद्याकाशेनेन्द्रियसंयोगः स्यात्, आकाशस्याप्रत्यक्षत्वे तत्प्रतियोगिकविभागस्याप्यप्रत्यक्षत्वात् । तस्मादेकेनैव कर्मणा द्रव्याकाशविभागो द्रव्यारम्भकसंयोगविभागश्च संपाद्यत इति न विभागजविभागकल्पना भाग्यवती ।

हस्तपुस्तकविभागानन्तरं कायपुस्तकविभागो भवतीति तार्किकक्रमकल्पनापि नोपपद्यते । एकस्मिन्नेवक्षण उभयविभागस्य जातत्वात् । हस्ताद्यवयवसंघातस्यैव कायत्वात् । यदि हस्ताद्यवयवसंघातात्स्यात्पृथक्कायस्तदेवं क्रमकल्पनोपपद्येतापि, न चैवमस्त्यवयवावयविनोरभेदस्वीकारात् ।

किं च यद्यवयवेभ्यः पृथगवयवीस्यात्तदा घटात् पृथक् पटवदवयव्यप्यवयवेभ्यः पृथगुपलभ्येत । नन्वऽवयवावयविनोरैक्ये घटकलशशब्दयोरिव कपालकलशशब्दयोरपि पर्यायत्वं स्यादिति चेन्न, आकारभेदेन भेदात् कम्बुग्रीवाद्याकारविशिष्टस्यैव घटपदवाच्यत्वात् । कटाहाकारविशिष्टस्य च कपालपदवाच्यत्वात् । तदाह श्रुतिः-'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । किं च यद्यवयवेभ्योवयवी पृथक् स्यात्तदा तस्यैकत्वाद्रक्तत्वाऽरक्तत्वादिविरुद्धधर्माध्यासो न भवेत्, रक्त एव प्रतीयेत वा ऽरक्त एव प्रतीयेत वा । अभेदपक्षे तु त्ववयवभेदेन रक्तत्वारक्तत्वप्रतीतौ न विरोधः । प्रयोगश्च-कार्यं कारणादपृथक् कारणस्वरूपं वा कार्यत्वाच्छुक्तिरजतवत् ।

ननु कार्यकारणयोरैक्ये कार्येणेव कारणेनापि कपालादिनाऽर्थक्रिया स्यादिति चेन्न, तादृशाकारविशिष्टस्यैव तादृशार्थक्रियां प्रति समर्थत्वात् । तत् सिद्धमवयवावयविनोरैक्यम् ।

प्रथमो विभागः कर्मजो द्वितीयादिर्विभागज इति कारणद्वयस्वीकारेण गौरवाच्च । एवं संयोगजसंयोगमपि न बहुमन्यन्ते वेदान्तिनः ।

एवं विभागजः शब्दोपि नास्ति । स्फुटद्वेणुदलशब्दे हि वेणुदलाकाशसंयोग एवासमवायिकारणम् । वायुवेणुदलसंयोगश्च निमित्तकारणम् । यथा पत्रादौ शुकशुकेतिशब्दं प्रति प्रतिपक्षिणापि वेगवद्वायुपत्रसंयोगस्य निमित्तकारणताभ्युपगम्यते । एवं भेर्याकाशसंयोगोऽसमवायिकारणम्, भेरीदण्डसंयोगश्च निमित्तकारणमिति ज्ञेयम् । समवायिकारणं तु शब्दस्य सर्वत्राकाशमेव । आघात्याघातकसंयोगो निमित्तकारणम् । आघात्याकाशसंयोगोऽसमवायिकारणम् । एवं विभज्यमानपदार्थाकाशसंयोगोऽसमवायिकारणम् । विभज्यमानपदार्थवायुसंयोगश्च निमित्तकारणरम् । शब्दं प्रतीति सर्वत्र शेषः । इति निष्कर्षः । तथा च न विभागस्य शब्दं प्रति क चिदपि कारणतोपलभ्यते येन विभागजोपि शब्दः स्यात् ।

१२ । प्रागभावनिवृत्तिर्घट एव न तु घटव्यतिरेकेणान्या का चित् प्रागभावनिवृत्तिरनुपलम्भात् । ननु घटव्यतिरेकेण प्रागभावनिवृत्तेरस्वीकारेऽभावाभाव एव भाव इत्युक्तः स्यात् तथा च प्रागभाववेलायां प्रध्वंसाभावस्याभावात् प्रध्वंसाभाववेलायां च प्रागभावस्याभावात् तस्य भावाभावस्य च घटरूपतास्तीति सर्वदा घटोपलब्धिः स्यान्नित्यत्वं च घटस्य प्रसज्येतेति चेन्न, प्रागभावाभावस्यैव घटस्वरूपतास्वीकारात् ।

ननु तथापि प्रागभावसमये घटोपलब्धिर्मा भवतु प्रध्वंससमये तु प्रागभावस्याभावोस्त्येवान्यथा प्रागभावोपलब्धिप्रसङ्गः स्यादिति ध्वंसकाले घटोपलब्ध्या घटस्य सादित्वेप्यनन्तत्वापत्तिरिति चेन्न, घटप्रागभावनिवृत्तिलक्षणस्य घटस्य निवृत्तिस्वीकारादन्यथा कस्य प्रध्वंस इत्यापत्तिः स्यात् । तथा च न प्रध्वंसकाले घटोपलब्धिः ।

किं च प्रागभावनिवृत्तिर्घटोत्पत्तिश्च त्वया क्षणभेदेनैव वक्तव्येति निवृत्तिक्षणे न प्रागभाव उपलभ्येत निवृत्तत्वात्, न चापि घट उपलभ्येतानुत्पन्नत्वात्, न चैतद् युक्तं यतः कदा चित् प्रागभाव एवोपलभ्यते, कदा चिद् घट एवोलभ्यते। किं च प्रागभावनिवृत्तेरपि घटव्यतिरिक्ता निवृत्तिः स्वीकार्यैति तस्या अपि तथा तस्या अपि तथेत्यनवस्थावस्थितिः। यदि प्रागभावनिवृत्तेर्निवृत्तिर्घटरूपेत्युच्यते तदा कृतमतिधावनेन प्रागभावनिवृत्तिरेव घटस्वरूपेति मनुतां लाघवात्। न च प्रागभावनिवृत्तिर्नित्येति वाच्यम्, प्रापञ्चिकपदार्थानां नित्यत्वे प्रमाणाभावात्। प्रागभावनिवृत्तिलक्षणस्य घटस्य नाशस्वीकारात्। घटनाशस्य प्रध्वंसस्यापि कपालनाशेन नश्यत्वात् कपालस्थत्वात्प्रध्वंसस्य।

प्रागभावो हि मृत्पिण्ड एवेति तस्योत्पत्त्या प्रागभावस्योत्पत्तिरप्यस्त्येवेति नानादित्वं प्रागभावस्य। न च कलशावस्थायामपि मृदोनुवर्तमानत्वान्मृत्पिण्डानिवृत्त्यभावे प्रागभावानिवृत्त्या घटस्य प्रागभावनिवृत्तिरूपत्वं न सङ्गच्छत इति वाच्यम्,-मृदोनुवर्त्तनेपि पिण्डत्वनिवृत्तेरवश्यं वक्तव्यत्वात्। प्रध्वंसस्यापि प्रध्वंसो भवत्येव प्रध्वंसस्य कपालाभिन्नत्त्वात् कपालस्थत्वाच्च कपालनाशेन तन्नाशसंभवात्।

१३। भेदोपि नाम निरूपयितुं न शक्यते। भेदज्ञानस्यापि भिन्नधर्मिप्रतियोगिज्ञानसापेक्षत्वाद् धर्मिप्रतियोगिभेदज्ञानस्यापि स्वकारणीभूत—धर्मिप्रतियोगिभेदज्ञानसापेक्षत्वादेवमग्रेपि तत्सापेक्षत्वादनवस्था। यदि बहुकक्षाधावनं त्यज्यते तथाप्येतद्भेदज्ञानस्य स्वधर्मिप्रतियोगिनोर्भेदस्य ज्ञानापेक्षास्ति तत्रापि प्रतियोगिप्रतियोगिकभेदज्ञानस्य धर्मिप्रतियोगिकभेदज्ञानस्य चापेक्षा, धर्मिप्रतियोगिकभेदज्ञानस्य प्रतियोगिप्रतियोगिकभेदज्ञानापेक्षेति परावृत्त्या चक्रकापत्तिः। अतोपि संकोचे परस्पराश्रयस्तु दुर्वार एव। तदुक्तम्—

'भेदोयं भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यो,
धर्म्यादेर्भेदसिद्धिः पुनरपि च तथेत्यापतेच्चानवस्था।
भेदे धर्म्याद्यभेदे वत भवति मृषा भेदबुद्धिर्विभेदे,
प्रादुःष्युः पूर्वदोषा न च गतिरपरा तेन भेदो मृषैव' १ इति।

तस्माद्भेदो मिथ्या प्रमाणाविषयत्वे सत्यपरोक्षत्वात् स्वप्नवद् गन्धर्वनगरवद्वा।

किं च भेदस्य घटपटतादात्म्यप्रतियोगिकत्वमपि वक्तुं न शक्यते तस्याप्रसिद्धत्वात्। न च घटतादात्म्यं घटेऽस्तीति वाच्यम्, अत्यन्ताभावादावतिव्याप्तेः। न च सामान्यवत् स्वपरनिर्वाहकत्वं भेदस्यापीति वाच्यम्, सामन्यस्यैव स्वीकारे प्रमाणाभावात् कथं तस्योपमानत्वं स्यात्?। न च विज्ञानवत् स्वपरनिर्वाहकत्वमिति वाच्यम्, [1]दृष्टान्तवैषम्यात्-विज्ञानं हि स्वयंप्रकाशपदार्थो न चैवं भेदस्य स्वयंप्रकाशत्वमिति कोयं विज्ञानभेदयोरुपमानोपमेयभावः। ननु विनिगमनाविरहाद् भेदस्यापि भवतु स्वयंप्रकाशतेति चेन्न, विषय प्रकाशकत्वमेव स्वयं प्रकाशत्वं न हि भेदेन विषयः प्रकाश्यते। यो नाम हतभागधेयो भेदः स्वप्रकाशनेपि न शक्तिं धत्ते का कथा तेन परप्रकाशतायाः। न च रूपवत् स्वपरनिर्वाहकत्वमिति वाच्यम्, दृष्टान्ते साध्यवैकल्यात्। घटादिप्रत्यक्षं प्रति रूपस्य निर्वाहकत्वेपि स्वप्रत्यक्षनिर्वाहकत्वाभावात्। रूपप्रत्यक्षं प्रति द्रव्यस्यैव निर्वाहकत्वात्। यथा रूपं विना घटादेश्चाक्षुषं प्रत्यक्षं न क्वचिद् दृष्टं तथा रूपस्यापि घटादिद्रव्यनिरपेक्षस्य प्रत्यक्षं न क्वचिच्चाक्षुषं जातम्। प्रभां पश्यामीत्यादावपि पृथिवीजलाकाशद्रव्याश्रयत्वपुरस्कारस्य सत्त्वात्। किं च प्रभासमवेतरूपस्य प्रभालक्षणद्रव्याश्रयत्वपुरस्कारेणैव प्रतीतिः। न च प्रभा रूपमात्रमपि तु रूपाश्रयस्तेजोद्रव्यमेव।

१४। वेदान्तमते यागादिव्यापारस्यैवापूर्वलक्षणावान्तरव्यापारद्वारा भगवदनुग्रहद्वारा वा फलं प्रति साधनत्वमपूर्वं प्रति च करणत्वम्। तदुक्तम्—

'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।
कार्येऽसङ्घटिताकारे करणत्वेन संमतः' १ इति।

मीमांसकास्तु यागादिव्यापारस्य फलं प्रत्येव करणत्वमपूर्वं प्रत्येव साधनत्वं मन्यन्ते। वेदान्तेऽपूर्वं लोकवेदप्रसिद्धं धर्माधर्मस्वरूपं

१ क्षाम्यन्तु मामनुचरजनं सर्वदोषैकभाजनं गर्भदासं वैष्णवापसदं निरयसृतिदामनिगडितमत्र श्रीमन्त उदाराशयचरिताः श्रीश्रीभाष्यकाराः।

स्वीक्रियते। ज्योतिष्टोमादिना धर्मापूर्वस्योत्पत्तेः, कलञ्जभक्षणादिना दुरितापूर्वस्योत्पत्तेः। मीमांसकैस्तु लोकवेदाप्रसिद्धं स्वसिद्धान्तमात्रकल्पितं नियोगाख्यमपूर्वमुररीक्रियते। तन्न क्षमन्ते वेदान्तिनस्तस्य लोकवेदासिद्धत्वादेव।

न च कार्य एव शक्तिः पदानाम्। सिद्धेपि पदशक्तेर्बहुलमुपलभ्यमानत्वात्। लिङादीनामेव कार्यबोधकत्वं घटादिपदानां च कार्यान्वितबोधकत्वमेवोच्यते इति व्यापारादिपदानां बोधकत्वमेव न स्याद् व्यापारस्य व्यापारेणान्वयासंभवात्। किं च कर्मणामपि क्रियमाणानां कार्यत्वं भवति न तु शब्देन बोध्यमानानामन्यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्यस्य ज्योतिष्टोमयागक्रियायाश्च तुल्यत्वप्राप्त्या ज्योतिष्टोमेनेति वाक्योच्चारयितुरपि स्वर्गः स्यात्। अतः कर्मस्वरूपस्यापि सिद्धस्यैव शब्दवाच्यत्वमिति सिद्धं सत्यादिपदानां सिद्धब्रह्मबोधकत्वम्।

'सत्यं ज्ञानमनन्तम्' इत्यादि सकलवेदस्यापि न तार्किकमतोक्तं पौरुषेयत्वम्। किंत्वपौरुषेयत्वम्। तथापि न मीमांसकोक्तमपौरुषेयत्वं वेदान्तमते सृष्टिप्रलययोः स्वीकारेण वेदोत्पत्तेरपि स्वीकारात्।

१९। प्रकारान्तरेण विषयो द्विविधो बाह्य आन्तरश्च। बाह्यो यथा मृन्मयो घट एष एव मानमेयः। आन्तरस्तु धीमयः साक्षिभास्यः। सांप्रदायिकैस्तु धीमयस्यैव विशेषतो बन्धमोक्षकारित्वमुच्यते। बाह्यस्यापि बुद्धिगोचरस्यैव बन्धकारित्वात्। वस्तुतस्तु न बन्धो न वा मोक्षस्तथोक्तं श्रीविद्यारण्यैः—

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वैमुक्त इत्येषा परमार्थता'१ इति।

यतोऽद्वैतमेव परमार्थस्तस्माल्लोकदृष्ट्या हि सदसद्वस्तुविवेकस्तत ऐहिकामुष्मिकफलभोगविरागस्ततः शमदमादिसंपत् ततो मुमुक्षा ततो जीवन्मुक्तिरिति क्रमः।

तत्र तत्त्वमिथ्याविवेचनमेव विवेकः स एव बोधः। एतस्य च श्रवणमनननिदिध्यासनानि हेतुः। अन्योन्याध्यासानुत्पत्तिरेव फलम्। वैराग्यस्य जिहासैव स्वरूपं जिहासितविषयविषयकदोषदृष्टिश्च

हेतुः। भोगानामनुपादित्सा च फलम्। तच्च वैराग्यं चतुर्विधम्—यतमानसञ्ज्ञावैराग्यम्, व्यतिरेकसञ्ज्ञावैराग्यम्, ऐकेन्द्रियसञ्ज्ञावैराग्यम्, वशीकारसञ्ज्ञावैराग्यम्। स्वरूपं चैतेषामुच्यते—

प्रथमे प्राप्त्युपायः स्याद् द्वितीयेल्पानिरोधता।
तृतीये चित्तशेषत्वं वैमुख्यं सर्वतः परे ॥ इति।

तदुक्तम्—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञावैराग्यम्' इति। शमश्चित्तनिग्रहो दम इन्द्रियाणां निग्रहः। आदिपदात्—उपरतिस्तितिक्षा समाहितः श्रद्धेति ग्राह्यम्। तदुक्तम्-

'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ १ ॥
आपातरमणीयेषु भोगेष्वेवं विचारवान्।
नानुरज्यति किं त्वेतान् दोषदृष्ट्या जिहासति ॥ २ ॥
अर्थानामर्जने क्लेशस्तथैव परिपालने।
नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः ॥ ३ ॥
मांसपाञ्चालिकायास्तु यन्त्रालोलेऽङ्गपञ्जरे।
स्नाय्वास्थिग्रन्थिशालिन्याः स्त्रियाः किमिवशोभनम् ॥ ४ ॥
त्वङ्मांसरक्तबाष्पाम्बु पृथक् कृत्वा विलोचने।
समालोकय रम्यं चेत् किं मुधा परिमुह्यसि ॥ ५ ॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ६ ॥
एवमादिषु शास्त्रेषु दोषाः सम्यक् प्रपञ्चिताः।
विमृशन्ननिशं तानि कथं दुःखेषु मज्जति' ॥ ७ ॥

१६। त्रिविधं तावत्प्रारब्धकर्म—इच्छापूर्वकं भुज्यमानं यथा-विषयोपभोगः। अनिच्छापूर्वकं भुज्यमानं यथा-रोगादिको दुःखकरः। परेच्छापूर्वकं भुज्यमानं यथा प्रियानुरागेण मोदकादिभोजनम्, सिंहवत्तीरगमनम्, द्विषदिच्छया कारागारादिबन्धः। विद्याप्रारब्धयोश्च न विरोधो भिन्नविषयत्वात्। यथा भर्जितानि बीजान्यङ्कुरोत्पादनसमर्थानि न भवन्ति तथापि भक्षितानि क्षुधामपनयन्ति। एवं विद्वदिच्छापि प्रारब्धवशेन भोगमात्रं करोति न तु भोगेषु व्यसनम्।

कूटस्थसहितश्चिदाभास एव व्यवहारे भोक्तेत्युच्यते। कूटस्थभासितोपि देहो चिदाभासेन भास्यत इत्ययमेव घटादिभ्यो देहस्य व्यतिरेकहेतुः । मरणं नाम लिङ्गदेहवियोगमात्रम् ।

१७ । त्रिविधा चोपासना-साकारोपासना प्रथमा, निराकारे ब्रह्मणि सत्यत्वादिधर्मप्रकल्पनपूर्विका द्वितीया, आत्मस्थितिमात्रं च तृतीया। तदुक्तं भगवता पतञ्जलिना-'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति । एषैव तृतीयोपासना निर्विकल्पसमाधिरित्युच्यते यौगिकैः । साकारोपासनापि मुक्तिप्रदैव तदुक्तम्—

'स्वयं भ्रमोपि संवादी यथा सम्यक् फलप्रदः ।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ।
अपरोक्षशिलाबुद्धिर्न [1]परोक्षेशतां नुदेत् ।
प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते २
अश्रद्धालोरविश्वासो नोदाहरणमर्हति ।
श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः' ३ इति

किं तु ज्ञानप्रतिबन्धेन जीवानां शास्त्रप्रतिपाद्येष्वपि साकारोपासनादिषु विप्रतिपत्तिर्भवति । प्रतिबन्धकश्च-भूतभाविवर्त्तमानभेदैस्त्रिधा। भूतप्रतिबन्धो यथा-भूतया कया चिच्चित्तवृत्त्या ज्ञानप्रतिबन्धस्तदुक्तम्-

'अतीतेनापि महिषीस्नेहेन प्रतिबन्धतः ।
भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते'

वर्त्तमानप्रतिबन्धोयथा—

'प्रतिबन्धो वर्त्तमानो विषयासक्तिलक्षणः
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः' इति ।

भाविप्रतिबन्धश्च जन्मान्तरहेतुः प्रारब्धशेषो यथा वामदेवभरतादीनाम् । अस्य प्रतिबन्धस्य शमाद्यैः क्षयः कार्यस्तदुक्तम्-

'शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेस्मिन् प्रतिबन्धेतः स्वस्य ब्रह्मत्वमश्नुते' । इति ।

ब्रह्मलोकेच्छापि भाविप्रतिबन्ध एव किं तु ब्रह्मलोके प्राप्ते सति

१ ईशविषयिका या परोक्षा बुद्धिस्तां न नुदति न क्षिपतीत्यर्थः ।

ते ज्ञानिनो ब्रह्मणा सह मुच्यन्त इत्येव विशेषस्तथैव श्रूयते–
'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इति ।
अत एवाचार्यैरैहिकामुष्मिकफलभोगविरागः साधनेषु निवेशितः ।

त्रिविधश्चानन्दो विषयानन्दो विद्यानन्दो (ज्ञानानन्दः) ब्रह्मानन्दश्च । विद्याविषययोरपि वस्तुतो ब्रह्मानन्दस्यैव मात्रानुवर्तते । कालभेदेन चोपभोगस्तेषामानन्दानां तदुक्तम्—

'एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ।
यात्यायात्येवमानन्दद्वये तत्त्वविदो मतिः' इति ।

विषयानन्दविद्यानन्दयोरन्तःकरणधर्मत्वेनैकत्वादानन्दद्वय इत्युक्तम् । विद्यानन्दोऽपि चतुर्विधो दुःखाभावः कामाप्तिः कृतकृत्यता प्राप्तप्राप्यता च । 'मानभूवं हि भूयासम्' इत्यात्मनि प्रेमदर्शनादात्मनः परमानन्दतायां सिद्धान्तः । मन्दान्धकारे परिदृश्यमानवस्त्विवात्मनोऽपि परमानन्दता यथा ज्ञातव्या तथा न ज्ञायतेऽनाद्यऽविद्यायाः प्रतिबन्धकत्वात् ।

सर्वस्य तावत् प्रमेयस्य प्रमाणाधीनत्वात् प्रमेयसिद्ध्यर्थं प्रमाणान्याक्षिप्यन्ते । प्रमाकरणं हि प्रमाणम् । तत्र चाक्षुषप्रमायां चक्षुः, रासनप्रमायां रसना, त्वाचप्रमायां त्वक्, घ्राणप्रमायां घ्राणम्, श्रावणप्रमायां श्रवणम्, मानसप्रमायां मनः, अनुमितौ लिङ्गज्ञानम्, उपमितिप्रमायां सादृश्यज्ञानम् शाब्दप्रमायां पदज्ञानम्, अर्थापत्तिप्रमायामन्यथानुपपत्तिज्ञानम्, अभावप्रमायां योग्यानुपलम्भः (अनुपलब्धिः) प्रमाणम् (करणम्) ।

ननु स्थाणौ पुरुषत्वभ्रमोऽपि प्रमाणेनैव भवति न हि जातु कश्चिच्चक्षुर्व्यापारमन्तरा स्थाणुं पुरुषं ज्ञातुं शक्नोतीत्यप्रमां प्रत्यपि प्रमाणानां करणत्वं प्राप्तमिति चेन्न तत्र केवलचक्षुषो व्यापाराभावात् । किं तु दोषसहकृतमेव चक्षुस्तत्र व्याप्रियते, प्रमाणत्वं च न दोषाश्लिष्टचक्षुषः किं तु दोषविधुरस्यैव ।

अनधिगताबाधितविषयकज्ञानत्वं च प्रमात्वम् । किं वा अनधिगतविषयकाऽबाधितज्ञानत्वं प्रमात्वम् । प्रमाणजन्यज्ञानत्वं वा, तद्वति

तत्प्रकारकज्ञानत्वं वा, तस्मिंस्तद्बुद्धित्वं वा प्रमात्वम् । अनुभूतविषयकाबाधितज्ञानत्वं स्मृतित्वम् । केवलसंस्कारजन्यज्ञानत्वं वा स्मृतित्वम् । कालद्वयसंबन्धोपलक्षितस्वरूपैक्यग्राहिज्ञानत्वं एकस्य कालद्वयसंबन्धग्राहिज्ञानत्वं वा प्रत्यभिज्ञात्वम् । स्मृतिप्रत्यभिज्ञयोर्वस्तुतो भेदो विषयपरोक्षत्वापरोक्षत्वेन । उभयत्रापि ज्ञानस्यानुभूतविषयकत्वे सत्यबाधितत्वात् ।

स्मृतिश्च-भावितस्मर्त्तव्याऽभावितस्मर्त्तव्या चाद्या स्वप्ने-भावितः कल्पितः स्मर्त्तव्यो विषयो यया । द्वितीया जाग्रत्समये-अभावितोऽकल्पितः स्मर्तव्यो विषयो यस्या इत्यर्थः ।

षड्विधं च प्रमाणम्-प्रत्यक्षानुमानोपमानाऽऽगमार्थापत्त्यनुपलब्धिभेदात् । षण्णामेव प्रत्यक्षादीनामनधिगताबाधितविषयाविषयकज्ञानजनकत्वात् प्रमाणत्वम् । तत्र द्विविधं प्रत्यक्षं विषयप्रत्यक्षं ज्ञानप्रत्यक्षं च । तत्र-योग्यवर्तमानविषयकत्वे सति प्रमातृचैतन्यस्य विषयचैतन्याभेदप्रयोज्यं विषयप्रत्यक्षम् । योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभेदप्रयोज्यं ज्ञानप्रत्यक्षम् ।

तदपि षड्विधम्-रासनं चाक्षुषं घ्राणजं श्रावणं मानसं ( आन्तःकरणिकम् ) च । तत्र रसावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं रासनं रसप्रत्यक्षम् । तत्र रसनाया द्वारत्वं रसनाद्वारान्तःकरणस्य वृत्तिरूपत्वेन रसदेशे गमनात् । आलोच्यविषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं चाक्षुषमालोच्यपदार्थप्रत्यक्षम् । अत्र चक्षुषो द्वारत्वं पूर्ववज्ज्ञेयम् । स्पृश्यविषयावाच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं त्वाचं स्पृश्यविषयप्रत्यक्षम् । अत्र त्वचो द्वारत्वं ज्ञेयम् । सौरभाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं घ्राणजं सौरभादिप्रत्यक्षं । अत्र घ्राणस्य द्वारत्वम् । शब्दावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं श्रावणं शब्दप्रत्यक्षम् । अत्र श्रवणस्य द्वारत्वम् । मानसविषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदजन्यं मानसं मानविषयप्रत्यक्षम् ।

रासनप्रत्यक्षे हीयं रीतिः रसनासमीपं प्राप्तेसति रसनीयविषयेऽन्तःकरणं निर्गत्य रसाकारेण परिणम्य मधुरकटुकषायादिभेदं

विविनक्ति। एवं त्वङ्गनिकटं प्राप्ते सति स्पृश्यविषये त्वग्द्वारान्तःकरणं निर्गत्य स्पर्शाकारेण परिणम्य कोमलाकोमलत्वकठोरत्वादिभेदं विविनक्ति, द्रव्याकारेण (स्पृश्याकारेण) च परिणम्य द्रव्य-(स्पृश्य) विवेकं संपादयति। एवमाघ्रेयपदार्थे सौरभादौ घ्राणदेशं प्राप्ते सति घ्राणद्वारान्तःकरणं निर्गत्य सौरभाद्याकारेण परिणम्य सौरभासौरभादिविविधविभेदं यथाशक्ति विविनक्ति। एवं शब्दे स्वदेशस्थित एव श्रवणद्वारान्तःकरणं निर्गत्य शब्दाकारेण परिणम्य मन्दमध्यतारादिविशिष्टशब्दभेदं विविनक्ति। चाक्षुषे रूपवति द्रव्ये स्वदेशस्थिते सत्येव चक्षुर्द्वारान्तःकरणं निर्गत्य रूपाकारेण परिणम्य पीतनीलादिरूपभेदं, एवं द्रव्यगतचक्षुर्योग्यसंख्यासंस्थानादिभेदं विविनक्ति, द्रव्याकारेण च परिणम्य द्रव्यं विविनक्ति। इन्द्रियविषयतामप्राप्तोऽबाधितो विषयोऽन्तःकरणेन विविच्यते यथा चित्स्वरूपं सत्यं ब्रह्म स भगवान् मां महापापिष्ठतरं संसारहुतभुजि दह्यमानं स्वकृपया परिपालयिष्यतीत्यादि। अन्यदपि यथारुचि विविनक्ति चेतः।

त्रिविधं तावच्चैतन्यम्–प्रमातृचैतन्यम्, प्रमाणचैतन्यं, विषयचैतन्यं च। अन्तःकरणावच्छिन्नमाद्यम्। वृत्त्यवच्छिन्नं द्वितीयम्। विषयावच्छिन्नं तृतीयम्। वृत्तिश्च प्रागेवोक्ता। चतुर्विधा च वृत्तिः–संशयो निश्चयो गर्वः स्मरणमिति। वृत्तिभेदेनैकमप्यन्तःकरणं मन इति, बुद्धिरिति, अहङ्कार इति, चित्तमित्युच्यते। यथा स्थाणुर्वा पुरुषो वेति संशयवृत्तिवेलायामन्तःकरणं मन इत्युच्यते।

ज्ञानप्रत्यक्षस्य च रीतिरियम् रसावच्छिन्नचैतन्येन रसाकारवृत्त्यवच्छिन्नचैतन्याभेदे सति रसज्ञानप्रत्यक्षम्। चाक्षुषविषयावच्छिन्नचैतन्येन चाक्षुषविषयाकारवृत्त्यवच्छिन्नचैतन्याभेदे सति चाक्षुषविषयज्ञानप्रत्यक्षम्। आघ्रेयावच्छिन्नचैतन्येनाऽऽघ्रेयाकारवृत्त्यवच्छिन्नचैतन्याभेदे सत्याघ्रेयविषयकज्ञानप्रत्यक्षम्। स्पृश्यावच्छिन्नचैतन्येन स्पृश्याकारवृत्त्यवच्छिन्नचैतन्याभेदे सति स्पृश्यज्ञानप्रत्यक्षम्। शब्दावच्छिन्नचैतन्येन शब्दाकारवृत्त्यवच्छिन्नचैतन्याभेदे सति शब्दविषयकज्ञानविषयकं प्रत्यक्षम्। मानसिकविषयावच्छिन्नचैत-

न्येन मानसिकविषयाकारवृत्त्यवच्छिन्नचैतन्याभेदे सति मानसविषयविषकज्ञानप्रत्यक्षम् ।

पुनरपि प्रत्यक्षं द्विविधम्-सविकल्पकं निर्विकल्पकं च । प्रथमं तत्र विशिष्टवैशिष्ट्यावगाहि ज्ञानं यथा-घटमहं जानामि, अत्र घटघटत्व इति निर्विकल्पकज्ञानानन्तरं घटत्वप्रकारकं घटज्ञानं जातम् । एवं नीलो घटः पीतः पट इत्यादि । परं तु विशिष्टवैशिष्ट्यानवगाहि ज्ञानं यथा-स एवायं घटस्तत्त्वमसीत्यादौ, स्वरूपमात्रबोधात् । तदुच्यते-

भवति तत्त्वमसिश्रुतिवाक्यगा सकलकिञ्चनबुद्धिनिराकृता ।
हतविशेषणका च समक्षताऽथ च घटोऽयमसौ सविकल्पिका ॥१॥

तच्च प्रत्यक्षं पुनर्द्विविधम्-जीवसाक्षीश्वरसाक्षिभेदात् ।

अनुमितिकरणमनुमानम् । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः । व्याप्तिश्चाव्यभिचरितं साहचर्यम्, निखिलहेत्वधिकरणनिष्ठसाध्यसामानाधिकरण्यं वा । सा च व्याप्तिर्व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते । तच्चानुमानं स्वार्थं परार्थं च । यत्र स्वयमेव पर्वते धूममवलोक्याग्निमनुमिनोति तत्स्वार्थं यथा-पर्वतोऽग्निमान् धूमात् । यत्र च परं प्रति वन्हिप्रतीतये न्यायवाक्यं प्रयुङ्क्ते तत् परार्थम् । न्यायो नामावयवसमुदायः । अवयवाश्चात्र त्रय एवावयवत्रयेणैव परार्थानुमानसिद्धेरधिकावयवस्वीकारस्य निष्फलत्वात् ।

तथा हि प्रतिज्ञाहेतूदाहरणरूपा वा, उदाहरणोपनयनिगमनरूपा वा । प्रतिज्ञावयवो यथा-पर्वतो वन्हिमान्, हेत्ववयवो यथा-धूमात्, उदाहरणावयवो यथा-यो यो धूमवान् स सोऽग्निमान् महानसवत्, उपनयावयवो यथा-वन्हिव्याप्यधूमवाँश्चायम्, निगमनावयवो यथा-तस्मादग्निमान्-इति । तथा च परार्थानुमाने पर्वतो वन्हिमान् धूमाद् यो यो धूमवान् स स वन्हिमान् महानसवत्-इति प्रयोक्तव्यम् । किं वा यो यो धूमवान् स स वन्हिमान् महानसवत् वन्हिव्याप्यधूमवाँश्चायं (पक्षः) तस्माद्वन्हिमान्-इति प्रयोक्तव्यम् । न हि किलैतद्रीत्याऽवयवत्रये प्रयुक्तेपि प्रत्यायनाय किं चिदवशिष्यते यदवयवद्वयेनापरेण प्रत्याय्येत । तार्किकमहाशयानां तु वाग्व्यापार एव जीवनकृत्यमिति ते यद्यधिकमप्यवयवद्वयमुत्पाद्यानुमानस्थले सप्तावयवान् प्रयुञ्जते

तथापि न दोषाय। अस्माकं तु ब्रह्मभावनं भगवदुपासनमेव जीवनकृत्यमिति किमित्यवयवत्रयेणैव समीहितप्रतीतिसिद्धेरवयवद्वयस्यापरस्य प्रयोगः सह्येत।

सन्दिग्धसाध्यवान् पक्षः, किं वा सिषाधयिषितधर्मानुयोगी पक्षः। 'प्रत्यक्षपरिकालितमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः, इतिवचनात्। यथा-पर्वतो वन्हिमान् धूमादित्यत्र पर्वतः पक्षः। तथा प्रपञ्चो मिथ्या दृश्यत्वाद् जडत्वादित्यत्र प्रपञ्चः पक्षः। यथा हि 'स्वाध्यायोऽध्येतव्यः' इति वाक्येन वेदत्वावच्छिन्नमात्रस्याध्ययनबोधनात्स्वाध्ययनमपि बोध्यते तथोक्तानुमानेनापि प्रपञ्चमात्रस्य मिथ्यात्वबोधनात्स्वमिथ्यात्वमपि बोध्यते स्वस्यापि पक्षतावच्छेदकपरिष्कृतत्वात्। निश्चितसाध्यवान् सपक्षो यथा-महानसः। पक्षैकदेशस्यापि निश्चितसाध्यवतः क्वचित्सपक्षत्वस्वीकारात् मिथ्यात्वानुमाने शुक्तिरजतादिरेव सपक्षः। निश्चितसाध्याभाववान् विपक्षो यथा प्रथमानुमाने जलह्रदो द्वितीये च ब्रह्म।

तच्चानुमानं त्रिविधमुच्यते कैश्चित्, अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि च। अन्वयव्यतिरेकि यथा-पर्वतो वन्हिमान् धूमात्, यो यो धूमवान् स स वन्हिमान् महानसवदित्यन्वयव्याप्तेर्लाभात्, यो यो न वन्हिमान् स स न धूमवान् जलह्रदवदिति व्यतिरेकव्याप्तेश्चोपलम्भादन्वयव्यतिरेकित्वम्। केवलान्वयि यथा-घटो वाच्यः प्रमेयत्वात्, यद्यत्प्रमेयं तत्तद् वाच्यं पटवदित्यन्वयव्याप्तेरेव लाभात्, यद् यन्न वाच्यं तत्तन्न प्रमेयमित्यत्रोदाहरणाभावात् केवलान्वयित्वम्। विपक्षाभावे केवलान्वयित्वमिति यावत्। केवलव्यतिरेकि यथा-ब्रह्म प्रपञ्चविवर्तोपादानमऽपरिणामित्वात्, यत्र यत्र प्रपञ्चविवर्तोपादानत्वं नास्ति तत्र तत्रापरिणामित्वमपि नास्ति यथा मृदादाविति व्यतिरेकव्याप्तिमात्रस्योपलम्भात्, यत्रापरिणामित्वं तत्र प्रपञ्चविवर्तोपादानत्वमित्यन्वयव्याप्तेरुदाहरणाभावात् केवलव्यतिरेकित्वम्। सपक्षाभावे केवलव्यतिरेकित्वमिति यावत्।

वेदान्तिभिस्त्वन्वयिरूपमेवानुमानमङ्गीक्रियते । न च केवलान्वयित्वं संभवति सर्वस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वादेवात्यन्ताभावाप्रतियोगित्वलक्षणं केवलान्वयित्वं कथमुपपद्येत ?, ब्रह्मलक्षणविपक्षसत्त्वादिति यावत् । केवलव्यतिरेकिणश्चार्थापत्तावेवान्तर्भावः । अयं भावः—केवलव्यतिरेकिणि साध्यसाधनयोरन्वयव्याप्तिपर्यवसानस्थानालाभावादभावयोरेव व्याप्तिरुच्यते तथार्थापत्तावप्यभावयोर्व्याप्तिरस्त्येव यत्र भोजनाभावस्तत्र पीनत्वाभाव इति पीनत्वं भोजनमाक्षिपति तत्रापि दिवाभोजननिषेधादर्थाद्रात्रिभोजनं कल्प्यते इति केवलव्यतिरेकिणोऽर्थापत्तावन्तर्भावः । न चार्थापत्तिः परित्याज्या केवलव्यतिरेकिणः पीनत्वेन भोजनकल्पनसामर्थ्येऽपि रात्रिभोजनकल्पनासामर्थ्यात् । तस्मात्केवलव्यतिरेक्येव परित्याज्यम् । उक्तरीत्यानुमाने केवलान्वयित्वकेवलव्यतिरेकित्वधर्मयोरभावादन्वयव्यतिरेक्यप्यनुमानं न संभवति किं त्वन्वयिमात्रमेवानुमानं संगच्छते ।

उपमितिकरणमुपमानम् । गवयनिष्ठगोसादृश्यज्ञानजन्यं ज्ञानमुपमितिः । गोनिष्ठगवयसादृश्यज्ञानं वा । गोष्ठे दृष्टगोव्यक्तिकस्य तदनन्तरमरण्यं प्राप्तस्य गवयव्यक्त्या चक्षुःसंनिकर्षे जाते भवति मतिरियं व्यक्तिर्गोसदृशीति, तदनन्तरमनेन सदृशी मदीया गौरिति निश्चयो जायते । तत्र गोनिरूपितगवयपिण्डनिष्ठसादृश्यज्ञानं करणम्—अयं पिंडो गोसदृश इति । गवयपिण्डनिरूपितगोनिष्ठसादृश्यज्ञानं फलम्—अनेन सदृशी मदीया गौरिति । इदमेव ज्ञानमुपमितिरित्युच्यते ।

वेदान्तमते व्यवहारावस्थायां सादृश्यस्यापि पदार्थान्तरत्वाद् गवयप्रत्यक्षकाले गोनिष्ठगवयसादृश्यप्रतीतेश्चानुमानादिव्यापाराभावे सत्युपमानप्रमाणमन्तरेणाशक्यत्वादुपमानप्रमाणाङ्गीकारः । न तु गवयो गवयपदवाच्य इति शक्तिग्रहणार्थं तस्यातिदेशवाक्येनैव सिद्धेः । अन्यथा गोसदृशो गवय इत्यतिदेशवाक्यस्य वैयर्थ्यं स्यात् । किं चैवं प्रत्यक्षादिप्रमाणस्यापि शक्तिग्रह एव फलमस्त्वविशेषाद् योयं कम्बुग्रीवादिमान् पदार्थः स घटपदवाच्य इति, यो वै धूमव्यापकः स वह्निपदवाच्य इति । न चातिदेशवाक्येन गोनि-

ष्ठसादृश्यज्ञानमुत्पाद्यते न शक्तिज्ञानमिति न नैष्फल्यमतिदेशवाक्यस्येति वाच्यम्, गवयप्रत्यक्षं विना गवि गवयसादृश्यप्रतीतेरसंभवात्। न चातिदेशवाक्येन शक्तिग्रहे जातेपि गवयदर्शनकाले 'यो मयातिदेशवाक्याद् गवयपदवाच्यत्वेन गृहीतः स एवायं गवयः' इति प्रत्यभिज्ञैवोपमानप्रमाणफलमस्त्विति वाच्यम्, प्रथमं कदाचिदप्यनुभूतेरभावात् स एवायं गवय इति प्रत्यभिज्ञानांशासिद्धेः। ननु शक्तिग्रहणं तु प्रथमं जातमिति शक्तिग्रहणप्रत्यभिज्ञैवोपमानफलमास्त्विति चेन्न, शक्तेरतीन्द्रियत्वात्। प्रत्यक्षविषया हि प्रत्यभिज्ञा भवति, अन्यथा स्मृतिप्रत्यभिज्ञयोर्भेद एव न स्यात्। न च शक्तिस्मृतिरेवोपमानफलम्—एवं ह्युपमाने बाह्येन्द्रियानपेक्षता स्यात् तथा च बहिरिन्द्रियहीनस्याप्युपमानेधिकरः स्यात्। न चापि गवये गोसादृश्यज्ञानमुपमानफलमिति वाच्यम्, तस्यातिदेशवाक्यादेवसिद्धेः। अन्यथा गोसादृश्यावच्छिन्नत्वेन गवये गवयपदशक्तिग्रह एव न स्यात्।

ननु न युक्तमतिदेशवाक्येन गवयपदशक्तिग्रहोऽतिदेशवाक्यस्य साफल्यं तु गवये गोसादृश्यज्ञानजनकत्वेन गवि गवयसादृश्यज्ञानजनकत्वेन वेति, उपमानफलं तु गवयपदशक्तिग्रह एवेति चेन्न, उपमिनोमीति व्यवहारविरोधात्। न हि गवयविलोचनकाले 'अयं गवयपदवाच्य इति शक्तिग्रहमेवोपमानफलत्वेनावधारयति, किं त्वनेन सदृशी मदीया गौरिति सादृश्यग्रहमेव। तथा च शक्तिग्रहस्य तद्धेतुत्वेन गवये गोसादृश्यज्ञानस्य चातिदेशवाक्येनैव जातत्वाद् गवि गवयसादृश्यज्ञानमेवोपमानप्रमाणफलमिति सिद्धम्। तदुक्तं भट्टपादैरपि—

'तस्माद् यत्स्मर्यते तत्स्यात् सादृश्येन विशेषितम्।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम्' ॥ इति।

शबरस्वामिनापि—'उपमानमपि सादृश्यमसंनिकृष्टेर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्य' इत्युक्तम्। सादृश्यप्रमाणलक्षणमुपमानमसंनिकृष्टेर्थे सादृश्यानुयोगिनि गवि सादृश्यबुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्य हेतुः कस्मात्? गोगवययोः सदृशत्वादित्यर्थः।

तच्च सादृश्यं न चक्षुषा गृह्यतेऽरूपित्वात्, न त्वचा स्पर्शहीनत्वात्, न च घ्राणेन गन्धादिव्यतिरिक्तत्वात्, नापि रसनया रसादिभिन्नत्वात्, न तु श्रवणेन शब्दाद्यतिरिक्तत्वात्, नो वा केवलेन मनसा बाह्यत्वादपि, स्मृतिमात्राविषयत्वाच्च । न च द्रव्यसमवेतगुणसामान्यादिवत् प्रत्यक्षवेद्यं-एवं हि वन्हेरपि संयुक्तविशेषणतासंबन्धेन प्रत्यक्षवेद्यत्वेऽनुमाननैरास्यप्रसङ्गः । नाप्यनुमानमात्रवेद्यं व्याप्तिज्ञानाद्यभावेप्यनेन सदृशी मदीया गौरिति बुद्धेरप्रत्यूहत्वात् । अनुमिनोमीतिव्यवहारसत्वाच्च ।

ननु सादृश्यस्योभयनिष्ठत्वाद् गोसदृशो गवय इत्युक्तेऽर्थादेव गवयसदृशी गौरितिबुद्धेर्जायमानत्वादर्थापत्त्यैव फले जाते किमुपमानेनेति चेन्न, एवं व्याप्यदर्शनेन व्यापकप्रसक्तेरर्थादेव सिद्धेः किमनुमानेनेति प्रतिबन्दीग्रस्तत्वात् । तस्मादुपमानप्रमाणं पृथगेवाभिमन्तव्यम् । तदुक्तं भट्टैः-

"प्रत्यक्षेणावबुद्धेपि सादृश्ये गवि च स्मृते ।
विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥
प्रत्यक्षेपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥
नचैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात् ।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥
गवये गृह्यमाणं च न गवामनुमापकम् ।
प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता ॥
गवयश्चाप्यसम्बन्धान्न गोर्लिङ्गत्वमृच्छति ।
सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ॥
एकस्मिन्नपि दृष्टेर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥
शृङ्गित्वादेरथोच्येत संबन्धाल्लिङ्गता गवि ।
न, तेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ॥
यदि तेभ्यः प्रतीतिःस्यान्निस्सादृश्यैव सा भवेत् ।
न गौः शृङ्गादिसदृशी सदृशी गवयेन तु ॥

सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात्परम् ।
गवयप्रत्ययादेव गोज्ञानमुपजायते ॥
सदृशावयवत्वे तु तेषामेवोपमा भवेत् ।
न च शृङ्गादयो यत्र तत्र गौरनुमीयते' ॥ इति ।

तस्माद् गोसादृश्यावच्छिन्नयावद्व्यक्तौ गवयपदवाच्यत्वग्रहोतिदेशवाक्येनैव भवतीति सिद्धमुपमानफलं गवि गवयसादृश्यमतिरेकेति ।

तच्च सादृश्यं न मेदिन्यादिद्रव्यं गन्धादिगुणाश्रयत्वाभावात् । न च कालदिग्देह्यन्तर्भूतं व्यापकत्वाभावात् । नापि मनः क्रियाश्रयत्वाभावात् । नापि गुणो गुणवृत्तित्वाद् घटशौक्ल्यवत् पटशौक्ल्यमप्यनित्यमिति । नापि कर्म कर्मवृत्तित्वाद् देवदत्तक्रियातुल्या यज्ञदत्तक्रियेति । नापि सामान्यं सामान्यवृत्तित्वादश्वत्वमपि गोत्ववदनेकसमवेतमिति । नापि विशेषो विशेषवृत्तित्वादयं विशेष एतद्विशेषवद् विशेषान्तरव्यावृत्त इति । नापि समवायः समवायवृत्तित्वात् सामान्यवत् समवायोपि तार्किककल्पित इति प्रतीतेः । नाप्यभावो भावत्वेन प्रतीयमानत्वात्, उपमानप्रमाणवेद्यत्वाच्च, अभावत्वे ह्यनुपलब्धिगम्यत्वमपि स्यात् । तस्मादतिरिक्त एव पदार्थः शादृश्यम् ।

न च न चात्र मनःप्रसाद इति वाच्यम्, सामान्यादीनामपि पदार्थान्तरत्वे प्रतिपक्षिणा मनःप्रसादाभावस्य वक्तुं शक्यत्वात् । न च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमेव सादृश्यमिति वाच्यम्, अन्यनिष्ठधर्माणामन्यनिष्ठत्वासंभवात् । तद्गतभूयोधर्मसदृशधर्मवत्त्वनिवेशे ह्यात्माश्रयता स्यात् । तत्रापि सादृश्यान्तरापेक्षायामनवस्था समवस्था । तद्गतभूयोधर्मवत्त्वं तु सादृश्यव्यञ्जकमेव । न च सादृश्यस्य सामान्ययोगातिरिक्तत्वे प्रकर्षाप्रकर्षभेदः किंनिमित्तः स्यादिति वाच्यम्, वाय्वादीनामपिप्रकर्षाप्रकर्षभेदः किंनिमित्त इति त्वयापि वक्तव्यत्वापातात् । पदार्थेषु प्रकर्षाप्रकर्षभेदो न भवतीत्यत्र प्रमाणाभावात् । भवति च प्रकर्षाप्रकर्षभेदो वायोस्तेजसः प्रकाशस्य रूपादिगुणानां च । प्रकर्षाप्रकर्षभेदो हि कूटस्थपदार्थेऽनुपपन्नो

नह्यस्माभिरपि ब्रह्मवत् कूटस्थत्वमुच्यते सादृश्यस्य येन तत्र प्रकर्षाप्रकर्षभेदोऽनुपपन्नः स्यात् । न च तद्गतभूयोधर्मवत्त्वव्याप्यः प्रकर्षाप्रकर्षभेदो येन सादृश्ये तद्गतभूयोधर्मवत्त्वत्वनिवृत्त्या प्रकर्षाप्रकर्षभेदोपि निवर्तेत । न चैवं वैसादृश्यमपि पदार्थान्तरं सादृश्याभावत्वात्तस्य । न च वैसादृश्यं न सादृश्याभावो वैपरीत्यस्यापि सम्भवादिति वाच्यम्, तस्य वैपरीत्यस्य सादृश्याभावादृते निरूपयितुमशक्यत्वात् । तुरगोरयोः सादृश्याभावं विना न किमप्यन्यद्वैसादृश्यमन्यथा भवतापि तेजोभावमृते तमसो द्रव्यान्तरत्वमङ्गीकृतं स्यात् ।

किं च तद्भिन्नत्वेसति तद्गतभूयोधर्मवत्त्वमेव सादृश्यमिति मते 'निरञ्जनः परमं साम्यमुपैति' इतिश्रुतिविरोधः स्यात्, उक्तरीत्या भेदस्याभावात्, ब्रह्म च न धर्मि येन जीवस्य ब्रह्मधर्मवत्त्वेन ब्रह्मधर्मसदृशधर्मवत्त्वेन वा साम्यमुपपद्येत । पदार्थान्तरत्वे तु ब्रह्मणि निर्विशेषत्वव्यपदेशवत्, जीवे च मुक्तत्वव्यपदेशवत्तत्साम्यव्यपदेशोप्युपपद्यते ।

यदि च किं नाम तत्सादृश्यं न किमपि पदार्थान्तरत्वेन गृह्यत इत्याक्षेपस्तदा किं नाम सामान्यं यत्पदार्थान्तरत्वेन गृह्यते ? सामान्यं हि घटत्वपटत्वादिरूपेण प्रसिद्धमिति चेत्सादृश्यमपि सादृश्यरूपेण प्रसिद्धमेव चन्द्रेण सदृशं मुखमित्यादौ । ननु सादृश्यं सादृश्यरूपेण प्रसिद्धमित्यसदुत्तरं न हि किं नाम द्रव्यमिति जिज्ञासायां द्रव्यमित्युत्तरं सङ्गच्छते, एवं हि सामान्यं हि घटत्वपटत्वादिरूपेण प्रसिद्धमित्यप्यसदुत्तरं यदेव सामान्यं तदेव घटत्वादिकमिति हेतोः । ननु नित्यत्वे सत्यनेकसमवेतत्वमेव सामान्यमिति चेदिदमप्यसदुत्तरम्, यदेव नित्यत्वे सत्यनेकसमवेतं तदेव सामान्यमिति द्रव्यमेव द्रव्यमित्यनेन समानत्वात् । नित्यत्वसमवेतत्वादीनामनुपपत्तेश्च समवायानङ्गीकारात्, आत्मातिरिक्तस्य नित्यत्वानुपपत्तेश्च । किं चोपमानवेद्यत्वं वा साधारणधर्मव्यज्यमानत्वं वा उपमानोपमेयभावासाधारणकारणत्वं वा सादृश्यमित्यस्यापि निर्वदनयोग्यत्वात् । तथापि तद्गतभूयोधर्मवत्त्वात्

पृथक् सादृश्यं मया नानुभूयते इतिचेन्न, न हि तवानुभवानुनिष्पन्नमेव प्रमाणं भवतीति नियतिरस्ति ? मयाप्यन्योन्याभावादृते न पृथक्त्वं पृथगनुभूयत इति प्रतिबन्दीग्रस्तत्वाच्च।

एवंरूपस्य च सादृश्यस्य रूपप्रयुक्तस्य ग्रहणे चक्षुषो द्वारत्वम्, स्पर्शविशेषप्रयुक्तस्य ग्रहणे त्वचो द्वारत्वम्, रसप्रयुक्तस्य च ग्रहणे रसनाया द्वारत्वम्, गन्धप्रयुक्तस्य ग्रहणे घ्राणस्य द्वारत्वम्, शब्दप्रयुक्तस्य ग्रहणे श्रवणस्य द्वारत्वम्, येनेन्द्रियेण यद्गृह्यते तत्प्रयुक्तसादृश्यस्य ग्रहणे तस्येन्द्रियस्य द्वारत्वमिति यावत्। एवं स्मर्यमाणविषयसादृश्यग्रहणे मनसो द्वारत्वमित्यवधेयम्। करणं तूपमानप्रमाणमेव।

सादृश्यानुभवे च प्रतियोगिप्रत्यक्षस्य नियमः, प्रतियोगिप्रत्यक्षे सति सादृश्यानुभवो भवति यथातिदेशवाक्यश्रवणसमये गोः प्रत्यक्षत्वाद् गोप्रतियोगिकगवयानुयोगिकसादृश्यप्रत्ययो जायते। एवं गवयप्रत्यक्षवेलायां गवयप्रतियोगिकगोऽनुयोगिकसादृश्यप्रत्ययो जायते। एवमुभयप्रत्यक्षकालेपि। प्रतियोगिप्रत्यक्षाभावे शब्दप्रयोगाभावे व्याप्यव्यपदेशाभावे च सादृश्यग्रहणं स्मरणात्मकमेव भवति। शब्दप्रयोगे च शाब्दमपि भवति व्याप्यव्यपदेशे चानुमानिकमपि भवति। यथा हि घटादिपदार्थः प्रत्यक्षयोग्योपि शब्दादिबोध्योपि भवत्येवमुपमानप्रमाणवेद्यमपि सादृश्यं क्वचिच्छब्दवेद्यं क्वचिदनुमानवेद्यं क्वचिदर्थापत्तिवेद्यमपि भवतीति न कोपि दोषः। यत्र शब्दप्रयोगोपि नास्ति न चानुमीयते नाप्यर्थादवगम्यते नापि स्मर्यते तत्र सादृश्यस्योपमानवेद्यत्वमेव यथा अनेन सदृशी मदीया गौरिति। किं च सादृश्यव्यञ्जकसाधारणधर्मवतोर्मध्ये यत्प्रत्यक्षविषयो भवति तत्प्रतियोगिकमेव सादृश्यमुपमानगम्यं भवतीति गवयप्रत्यक्षे गवयप्रतियोगिकमेव सादृश्यं गृह्यते यथाऽनेन सदृशी मदीया गौरिति। न च गोप्रतियोगिकं सादृश्यं गृह्यते तदोपमानेन। अत एवातिदेशवाक्यश्रवणसमये गोः प्रत्यक्षत्वाद् गोप्रतियोगिकं गवये सादृश्यं गृह्यते।

एकस्यैवातिदेशवाक्यस्य गवयपदशक्तिग्राहकत्वं गोप्रतियोगिकसादृश्यग्राहकत्वं च कथं स्यादिति चेत्, यथैकस्यैव वन्हेः प्रका-

शकत्वं तापकत्वं च सङ्गतं तथैव। यथा च गतोस्तमर्क इत्येकस्यैव वाक्यस्यानेकार्थबोधकत्वं संभवति तथा। किं वातिदेशवाक्येन शक्तिग्रह एव भवतु गवये गोप्रतियोगिकसादृश्यग्रहणमतिदेशवाक्यश्रवणसमयेप्युपमानप्रमाणेनैवेति कल्पनेपि न कोपि दोषः। उपमानेन सादृश्यग्रहणे प्रतियोगिप्रत्यक्षमात्रस्य नियमात्। यत्रातिदेशवाक्यश्रवणसमये गोप्रत्यक्षमपि नास्ति तत्र गवये गोप्रतियोगिकसादृश्यग्रहणमतिदेशवाक्यादेवावगन्तव्यम्। उपमानेन सादृश्यग्रहणे प्रतियोगिप्रत्यक्षस्य नियमात्। गवयप्रत्यक्षकाले गवि गवयप्रतियोगिकसादृश्यग्रहणमेवोपमानप्रमाणफलमिति सिद्धम्।

तच्च सादृश्यं प्रत्याश्रयं प्रतियोगिभेदेन भिन्नमन्यथा सर्वस्य सर्वेण सादृश्यं स्यात्। सादृश्यं च–व्यतिरेकप्रधानमभेदप्रधानं साम्यप्रधानं बिम्बप्रतिबिम्बभावगर्भमित्यादिभेदैरनेकविधम्। तदुक्तमालङ्कारिकैः—

‘उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः’॥ इति।

उपमा च सादृश्यमेव तदुक्तम्–‘साधर्म्यमुपमा भेदे’ इति। पुनरपि द्विविधं सादृश्यं रमणीयमरमणीयं च, आद्यं तावदुपमादिस्वरूपतां प्राप्तं यथा चन्द्रवन्मुखम्, हंसीव कृष्ण ते कीर्तिरित्यादि। द्वितीयं यथागौरिव गवयः, अनेन सदृशी मदीया गौरित्यादि। तच्च सादृश्यं स्वरूपसंबन्धेन तिष्ठति।

अबाधितार्थविषयकबोधजनकवाक्यजन्यं ज्ञानं शाब्दबोधः। क्रियाप्रतिपादकपदघटितानि पदानि वाक्यम्। योग्यताकाङ्क्षासत्तियुक्तः पदसमुदायो वा।

वेदान्तमते शाब्दबोधे हि पदैः पदार्थस्मृतिमात्रं जायते तदनन्तरं पदार्थस्मृतिभिः स्मृतैः पदार्थैर्वा परस्परान्वयबोधो लक्षणया भवति। तत्रान्वयबोधं प्रति करणत्वं पदानामेव, पदार्थस्मृतेः स्मृतपदार्थानां वाऽवान्तरव्यापारत्वम्। अनुमितौ परामर्शस्येव तर्कमते। लक्षणास्वीकारे गौरवमिति चेन्न, ‘अनन्यलभ्यो हि शब्दार्थः’ इति न्यायात्। तस्मादन्वयव्यतिरेकाभ्यां पदार्थस्मृतिद्वारा वा स्मृत-

पदार्थद्वारा वा लक्षणैव पदानामन्वयबोधे। पदार्थस्मृत्युत्पादनसामर्थ्योपहितस्य विषयज्ञानस्यैवाभिधाव्यापारत्वेन स्वीकारादित्यऽभिहितान्वयवादो वेदान्तसंमतः। न चान्विताभिधानवादो गामानयेत्यत्र गामित्यस्यैव पदस्यानयनान्वितगोपदार्थबोधकत्वे आनयपदवैयर्थ्यप्रसङ्गात्। अन्वितत्वमपि भावनयोच्यत एवं घटोस्तीत्यादिवाक्यस्याबोधकत्वमेव प्रसज्येत, न चेष्टापत्तिः-घटोस्तीत्यादिवाक्यानामपि सकलजनेषु बोधकत्वेन प्रसिद्धेः।

शाब्दबोधे हि प्रथमं पदज्ञानं ततः पदार्थस्मृतिस्ततो वाक्यार्थबोध इतिक्रमः। शक्तिधियश्च सहकारित्वम्। द्विविधश्च पदार्थः शक्यो लक्ष्यश्च। शक्तिविषयः शक्यः, शक्तिश्च पदस्य पदार्थेन साक्षात्सम्बन्धो यथा—घटपदेन कम्बुग्रीवादिमान् पदार्थो बोध्य इति। लक्षणा नाम शक्यार्थस्मृतिव्यवहितशक्यार्थसम्बन्धिपदार्थविषया प्रतीतिः। तत्रापि यत्र साक्षात्सङ्केतितार्थस्मृत्या पदार्थान्तरबोधो भवति तत्र प्रयोजनवती लक्षणा यथा-गङ्गायां घोष इति, अत्र प्रवाहलक्षणार्थस्मृत्या तटस्य बोधः शैत्यपावनत्वादिप्रतीतिश्च प्रयोजनम्। यत्र साक्षात्सङ्केतितार्थस्मृतिर्न भवति किं तु पदार्थान्तरबोध एव भवति किं वोत्पलशतपत्रभेदन्यायेन झटिति पदार्थान्तरबोधो भवति सङ्केतितार्थस्मृतिर्न लक्ष्यते तत्र निरूढा लक्षणा यथा कुशलपदस्य निपुणे।

तदुक्तम्—'मुख्यार्थबोधे मुख्यार्थाऽऽसन्नत्वे लक्ष्यतेऽपरः।
रूढेः प्रयोजनाद्वाथो यत्सोक्ता लक्षणा बुधैः'॥ इति।

प्रयोजनवत्यपि द्विधा-केवललक्षणा लक्षितलक्षणा च। केवलसङ्केतितार्थव्यवधाने सति प्रथमा यथा-गङ्गायां घोष इत्यत्र। शक्यलक्ष्योभयार्थव्यवधाने सति परा यथा द्विरेफपदस्य मधुपे, अत्र हि द्विरेफपदस्य रेफद्वन्द्वे शक्तिर्भ्रमरपदे च लक्षणा मधुपपदार्थे लक्षितलक्षणा लक्षितेन लक्षितस्य वा लक्षणा लक्षितलक्षणेत्यर्थः। प्रकारान्तरेण त्रिधा-जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा च। तत्र गङ्गायां घोषो विषं भुङ्क्ष्वेत्यादौ प्रथमा। कुन्ताः प्रविशन्ति शुक्लो घटः प्रविशतीत्यादौ द्वितीया। सोयं देवदत्त इत्यादौ तृतीया, अत्र हि

तत्पदबोध्यातीतकालिकस्येदंपदबोध्यवर्तमानकालिकस्य चैक्यानुपपत्त्या कालद्वयसम्बन्धांशपरित्यागोऽप्यस्ति देवदत्तस्य च सङ्ग्रहोऽप्यस्तीति । तृतीयामेनां नापि मन्यन्ते केपि ।

प्रकारचतुष्टयमन्यदप्यस्त्यस्याः—गौणसारोपा, गौणसाध्यवसाना, शुद्धसारोपा, शुद्धसाध्यवसाना च । गौर्वाहीक इत्यत्र प्रथमा, गौरेवायमित्यादौ द्वितीया, आयुर्घृतमित्यादौ तृतीया, आयुरेवेदमित्यादौ चतुर्थी । तात्पर्यानुपपत्तिरेव लक्षणानिदानम् ,अन्वयानुपपत्तेर्निदानत्वेन स्वीकारे तु काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा न स्यादन्वयानुपपत्तेरभावादस्ति चात्राजहल्लक्षणा ।

वाक्यार्थबोधे चाकाङ्क्षायोग्यताऽऽसत्तितात्पर्यज्ञानानां कारणत्वम् । तत्रावश्यापेक्षितपदान्तराभावप्रयुक्तार्थबोधाजनकत्वमाऽऽकाङ्क्षात्वम्—यथा घटमित्येतावदुक्ते भवत्यपेक्षाऽऽनयपदस्येति साकाङ्क्षत्वान्नार्थबोधजनकत्वम् । घटमानयेत्यस्यार्थबोधजनकत्वमस्ति निराकाङ्क्षत्वात् । उच्चारितपदार्थानां परस्परसंसर्गवत्त्वं योग्यतात्वम् । यथा जलेन सिञ्चतीत्यत्र जलसेचनयोः क्रियाकरणसंसर्गवत्त्वेनार्थबोधजनकत्वम् । योग्यताभावो यथा–वन्हिना सिञ्चतीत्यत्र । अनपेक्षितपदपदार्थकालादिभिरनन्तारितपदार्थोपस्थितिरासत्तिः । यथा घटमित्यस्य पदस्यानपेक्षितान्यपदार्थस्य कालस्य वा व्यवधानादुच्चारितेनानयेतिपदेन सहासत्तेरभावान्नार्थबोधजनकत्वम् । आसत्तिसत्त्वे तु बोधजनकत्वं यथाऽव्यधानेन भाषितस्य घटमानयेति वाक्यस्य । प्रकरणोचितप्रतीतिजननयोग्यता तात्पर्यम् । यथा भोजनप्रकरणोक्तसैन्धवपदस्य लवणार्थप्रतीतिजननयोग्यतया लवणे तात्पर्य मिति तस्य तात्पर्यस्य ज्ञानाभावे सैन्धवमानयेति वाक्यस्य प्रतिपाद्यार्थबोधजनकत्वं न संभवतीति कारणत्वम् ।

तच्च वाक्यं द्विविधं लौकिकं वैदिकं च । लौकिकमपि द्विविधम्–आर्षमनार्षं च । आर्षं श्रीरामायणभारतादि, अनार्षं रघुवंशादि घटमानयेत्यादि च । वेदश्च विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पञ्चविधः । तत्र 'यजेत स्वर्गकामः' इत्यादिर्विधिः । 'इदं विष्णुर्वि

चक्रमे' इत्यादयो मन्त्राः। 'अग्निहोत्रं जुहोति' इत्यादीनि नामधेयानि। 'मा हिंस्यात्सर्वा भूतानि' इत्यादयो निषेधाः। 'सोरोदीत्' 'तरति शोकमात्मवित्' इत्यादयोऽर्थवादाः। वेदश्चात्र न मीमांसकमत इव नित्यो नापि तर्कमत इवानित्यः किं त्वीश्वरोच्चारितोऽनित्योऽपौरुषेयः 'महतो भूतस्य निश्वासितमेतद् यद् ऋग्वेदः' इत्यादिश्रुतेः। सजातीयोच्चारणापेक्षोच्चारणविषयत्वमपौरुषेयत्वं वेदानां न त्वनुच्चारणविषयत्वमपौरुषेयत्वम्।

साध्यज्ञानेन साधककल्पनमर्थापत्तिः, तत्र साध्यज्ञानस्य करणत्वं फलं तु साधकज्ञानमेव। यथा—पीनो देवदत्तो दिवा न भुङ्क्ते, अत्र साध्यं पीनत्वं साधकं च रात्रिभोजनम्। साध्यस्य पीनत्वस्य भोजनमन्तरेणानुपपत्तेर्दिवा भोजनस्य च निषेधादर्थापत्त्या रात्रिभोजनं कल्प्यते। एवं जीवी देवदत्तो गृहे नास्तीत्यत्रापि साध्यस्य जीवित्वस्य क्वचित्सत्त्वमृतेऽनुपपत्तेर्गृहसत्तायाश्च निषेधादर्थापत्त्या देवदत्तस्य बहिःसत्त्वं कल्प्यते।

द्विविधा चार्थापत्तिः-दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च। दृष्टार्थापत्तिर्यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' 'जीवी देवदत्तो गृहे नास्ति' इत्यादौ। दृष्टेन पीनत्वेनार्थस्य रात्रिभोजनस्यापत्तिः कल्पनेत्यर्थः। एवं सर्पोयमिति भ्रमे जाते पुरोवर्तिनि रज्जुद्रव्ये नायं सर्प इति निषेधेन सर्पविषयकासत्यत्वज्ञानं विना भ्रान्तिनिवृत्तेरनुपपत्त्या सर्पस्य सद्भिन्नत्वं कल्प्यते, प्रतीत्या चासद्भिन्नत्वं कल्प्यत इत्यर्थापत्त्याऽनिर्वचनीयत्वमेवैवं शुक्तिरजतादौ ज्ञेयम्। श्रुतार्थापत्तिर्यथा—'तरति शोकमात्मवित्' इत्यत्र शोकशब्दाभिधेयस्य बन्धरूपस्य संसारस्य मिथ्यात्वमृत आत्मज्ञानेन तरतिपदवाच्यनिवृत्तेरनुपपत्त्यार्थापत्त्या संसारस्यात्मज्ञानेन बाध्यत्वलक्षणं मिथ्यात्वं कल्प्यते—चेत्संसारो मिथ्या न स्यात्तर्हि कथमात्मप्रत्ययेन बाधितः स्यादिति। पूर्वत्र साध्यस्य पीनत्वस्य प्रत्यक्षयोग्यत्वेन दृष्टत्वाद् दृष्टार्थापत्तिः। उत्तरत्र साध्यस्य संसारबाधस्य प्रत्यक्षायोग्यत्वाद्वेदे श्रुतत्वाच्च श्रुतार्थापत्तिः। एवं सर्पोयमित्यत्रापि भ्रान्तिप्रतीतस्य सर्पस्य भ्रमात्मकप्रत्यक्षविषयत्वाद् दृष्टार्थापत्तिरेव।

श्रुतार्थापत्तिरपि द्विविधा-अभिधानानुपपत्तिरभिहितानुपपत्तिश्च। तत्र प्रथमा यथा-द्वारमिति श्रुत्वाऽर्थात् पिधेहीति पदमध्याह्रियते। अभिधानस्य तात्पर्यस्यानुपपत्तिरस्ति पिधेहीति पदं विनेत्यर्थः। अभिहितानुपपत्तिर्यथा-'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' अत्राभिहितस्य यागस्य क्षणिकत्वात्स्वर्गसाधनत्वानुपपत्त्या यागजन्यमपूर्वं कल्प्यते। अत्र च यत्र यत्र पीनत्वं तत्र तत्र रात्रिभोजनकर्तृत्वमित्यन्वयव्याप्तेर्दिवाभोजनपीने यज्ञदत्ते व्यभिचारादभावयोरेव व्याप्तिरस्ति यथा-यत्र भोजनाभावस्तत्र पीनत्वाभाव इति पीनत्वं भोजनमाक्षिपति दिवाभोजनस्य च निषेधादर्थाद्रात्रिभोजनं कल्प्यते। अत एव व्यतिरेक्यनुमानस्यात्रान्तर्भावः। यत्रेतरभेदाभावस्तत्र गन्धवत्त्वाभाव इति गन्धवत्त्वेनेतरभेदः कल्प्यते पृथिव्यामित्येवम्।

अनुमानादिज्ञानकरणाजन्यत्वेसत्यभावानुभवं प्रति यदसाधारणं कारणं तदेवानुपलब्धिप्रमाणम्। सैवानुपलब्धिर्धर्मिणेन्द्रियसंसर्गे सत्यभावोपलब्धौ करणमुच्यते फलं त्वभावोपलब्धिः (अभावज्ञानम्) केवलानुपलब्धौ दोषप्रसक्त्या कर्मधारयेण योग्यानुपलब्धेः करणत्वं ज्ञेयम्। अन्यथाऽतीन्द्रियाभावस्याप्यनुपलब्धेः प्रत्ययः स्यात्। योगत्वं चानुपलब्धेर्यद्यऽत्र घटः स्यात्तदोपलभ्येतेति तर्कमूलत्वम्। घटाद्यभावप्रत्ययस्थल उक्ततर्कप्रसरसंभवाद् घटाद्यभावानामनुपलब्धिगम्यत्वम्। अभावश्चाधिकरणत्मक एव, नहि नास्त्यत्र क्ष्मातले घटोऽत्र क्ष्मातलकैवल्यादृतेऽन्यः कोपि घटाभावलक्षणः पदार्थ उपलभ्यते।

ननु यद्यभावोधिकरणात्मक एव तर्हि भूतलस्वरूपोपलब्धिस्तु प्रत्यक्षप्रमाणेनाप्यस्तीत्यनुपलब्धिप्रमाणाङ्गीकारवैयर्थ्यप्रसङ्ग इति चेन्न, तस्याधिकरणग्रहणमात्रेण चारितार्थ्यात्। अनुपलब्धिप्रमाणानङ्गीकारे च भूतलस्वरूपस्य घटसत्ताविरोधित्वाभावाद् घटसत्तासन्देह एव स्यादिति भूतलस्वरूपस्य प्रत्यक्षेण ग्रहणेपि कैवल्यलक्षणोऽभावोऽनुपलब्ध्यैव गृह्यते इत्यनुपलब्ध्यैव घटसत्तासन्देहानवृत्तिः। किं चाभावस्य प्रत्यक्षायोग्यत्वादनुपलब्धिप्रमाणस्वीकारः। न च विशेषणतासम्बन्धेनाभावस्यापि प्रत्यक्षयोग्यत्वमस्तीति वाच्यम्—

एवं ह्यनुमेयस्यापि पक्षविशेषणतासंबन्धेन प्रत्यक्षसंभवेऽनुमानवैयर्थ्यप्रसङ्गः।

स चाभावश्चतुर्विधः—प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावभेदैः। तत्र प्रतियोगिसत्तापूर्वकालिकोऽभावः प्रागभावो यथा-घटस्य मृत्पिण्डावस्था। प्रतियोगिसत्तोत्तरकालिकोऽभावः प्रध्वंसाभावो यथा-नष्टो घट इति प्रतीतिविषयः। वस्तुपरिच्छेदकारणीभूतोऽभावोऽन्योन्याभावो यथा घटः पटो नेति प्रतीतिविषयः। त्रैकालिकोऽभावोऽत्यन्ताभावो यथा-वायौ रूपाभावः। धर्मिनाशेनाभावनाशस्वीकारात् ब्रह्माभिन्ननिखिलपदार्थस्य नाशप्रतियोगित्वाच्च सर्वेऽभावा अनित्या एव। न च वायुगतरूपात्यन्ताभावनाशे वायौ रूपोपलब्धिप्रसङ्ग इति वाच्यम्—धर्मिनाशेनाभावनाशस्वीकाराद्वायौ नष्टे क रूपोपलब्धिः प्रसज्येत ?। न च घटध्वंसस्यापि ध्वंसे घटोपलब्धिप्रसङ्गः, अनन्तरध्वंसस्यापि ध्वंसरूपत्वाद् घटरूपत्वानङ्गीकाराच्च। अन्यथा घटध्वंसेपि प्रागभावोपलब्धिः प्रसज्येत। अन्योन्याभावस्तु धर्मिप्रतियोगिनोः सादित्वे सादिर्यथा घटपटयोः, अनादित्वेऽनादिर्यथा-ब्रह्मजीवयोः। पुनरप्यन्योन्याभावो द्विधा-सोपाधिको निरुपाधिकश्च-तत्राद्यो यथैकस्यापि कनकस्य कटककुण्डलाद्युपाधिभेदेन। परमात्मनो वा यथान्तःकरणभेदेन। द्वितीया यथा-घटपटादीनाम्।

येनेन्द्रियेणाभावप्रतियोगी ग्रहीतुं शक्यते तेनैवेन्द्रियेण यदि धर्मिप्रत्यक्षं स्यात्तदाऽभावस्यानुपलब्धिगम्यत्वं ज्ञेयं यथा-घटाभावरूपाभावादीनां प्रतियोगी घटादिश्चक्षुषा ग्रहीतुं शक्यत इति घटाद्यऽभावधर्मिणो भूतलादेर्यत्र चक्षुषा ग्रहणं भवति तत्र भूतलादौ घटाद्यभावोऽनुपलब्ध्या गृह्यते चक्षुषस्त्वाधिकरणग्रहणमात्रेण चारितार्थ्यम्। एवं स्पर्शाभावोप्यनुपलब्धिप्रमाणगम्यः स्पर्शाभावाधिकरणस्य (द्रव्यस्य) स्पर्शग्राहकेन्द्रियेण ग्रहीतुं शक्यत्वात्। रसाभावगन्धाभावशब्दाभावादीनां नोपलब्धिगम्यत्वं यतो रसाभावप्रतियोगी रसस्तु रसनया गृह्यते रसाभावाधिकरणं द्रव्यं तु रसनया न ग्रहीतुं शक्यते तस्य चक्षुर्ग्राह्यत्वात्त्वग्ग्राह्यत्वाद्वा। एवं कुसुमे गन्धाभा-

वप्रतियोगी गन्धस्तु घ्राणेन गृह्यते गन्धाभावधर्मि द्रव्यं तु न घ्राणेन ग्रहीतुं शक्यते । एवं शब्दाभावधर्म्याकाशमपि न श्रवणग्राह्यमस्तीति रसाभावो गन्धाभावः शब्दाभावः कारणाभावे कार्याभावो व्यापकाभावे व्याप्याभाव इत्यादयोऽभावा अनुमानादिगम्या एव । न चोक्तनियमस्य कार्याभावव्याप्याभावादौ व्यभिचारः शङ्कनीयः स्वातन्त्र्येण कार्याभावादेरनुपलब्धिगम्यत्वेपि कारणाभावहेतुत्वेन कार्याभावस्यानुमानगम्यत्वादेवेत्यभिप्रायात् । एवं व्यापकाभावेन व्याप्याभावप्रतीतिरनुमानादेवेति विज्ञेयम् ।

रजतमिदमित्यत्र रजताभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको ज्ञेयः । यथा घटसत्त्वेपि पटत्वेनेह घटो नास्तीति प्रतीतिर्भवत्येव तद्वत् रजतप्रतीतौ सत्यामपि पारमार्थिकत्वेनेह रजतं नास्तीति प्रतीतेर्भवत्येव तस्मात्पारमार्थिकत्वेन कालत्रयेपि शुक्तौ रजतं नास्तीति सिद्धं प्रतीतिसमयेपि रजते पारमार्थिकत्वाभावस्य निश्चयात् सकलप्रपञ्चस्यापारमार्थिकत्वात्तस्मात् प्रतीतिसमये तु पारमार्थिकत्वेन रजतं प्रतीयत इत्यपि नाशङ्कनीयम् । रजतमिदमित्यादौ प्रातिभासिकरजतस्वीकारेण यत्रारोप्यं संनिहितं न भवति तत्रानिर्वचनीयख्यातिरुच्यते । यत्र त्वारोप्यं संनिहितं=चक्षुःसंनिकृष्टं भवति तत्रान्यथाख्यातिरेव यथा-लोहितः स्फटिक इत्यत्र यदा जपाकुसुमलौहित्येन सह पृथगपि चक्षुःसंनिकर्षसत्त्वं स्यात् तदा । सद्रूपेणासद्रूपेण च यस्य निर्वचनं न भवेत्तदेवानिर्वचनीयं यथा शुक्तिरजतादि । तदुक्तम् ।

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः ' ॥ इति ॥

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एव ज्ञायत उत्पद्यते च । स्वतस्त्वं च ज्ञानसाग्रीजन्यत्वे सति तदतिरिक्तसामग्र्यजन्यत्वम् । तदुक्तम्—

आहुर्विज्ञानसामग्री जन्यत्वे सत्यजन्यता ।
तदन्यतः प्रमायास्तत् स्वतस्त्वमिति तद्विदः ' ॥ इति ॥

अन्यथाऽनवस्था स्यात् प्रमाणलक्षणविज्ञाने प्रामाण्यसंपादकविज्ञानस्यापि प्रामाण्यज्ञानाय प्रामाण्यापादकान्तरापेक्षणप्रसङ्गात् ।

ननु दोषाभावस्यैवाविनाभावेन प्रामाण्यं प्रतिकारणत्वं भवत्विति चेन्न, यथाकाशस्यापि घटोत्पत्तिं प्रत्यविनाभावेपि न कारणत्वं तथात्रापि ज्ञेयम् । दोषाभावस्य हेतुत्वाङ्गीकारेपि परतस्त्वं न संभवत्यभावस्याधिकरणात्मकत्वात् । अप्रामाण्यं प्रति तु दोषस्य हेतुत्वमस्त्येव ।

उक्तानां प्रमाणानां प्रतिपादनादनन्तरं ब्रह्मस्वरूपं परामृश्यते प्राधान्येन ब्रह्मस्वरूपस्यैव प्रमेयत्वात् । अत एव परमसिद्धान्तिभिः प्रत्यक्षादीनामपि सन्मात्रग्राहित्वमेवोक्तम् । तच्च वेदान्तवेद्यं ब्रह्म निर्विशेषमेव 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सत्यं विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतीनां स्वरूपमात्रपरामर्शकत्वात् । अत्र चोक्तं सत्यत्वं कालत्रयाऽबाध्यत्वम् । ज्ञानत्वं स्वयंप्रकाशत्वम् । अनन्तत्वं देशकालवस्तुभिरनवच्छेद्यत्वम् । आनन्दत्वमन्येच्छानधीनेच्छाविषयत्वम् ।

तस्य भगवतो ब्रह्मणोऽप्यवस्थाचतुष्टयमुच्यते–चिदन्तर्यामी सूत्रात्मा विराट् चेति । तत्र मायास्पर्शरहितं स्वयं ब्रह्म चित्, तस्यैव कूटस्थ इतिसञ्ज्ञा । तदुक्तम्—

'अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ।
कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते' ॥ इति ॥

विशुद्धसत्त्वप्रधानमायोपाधिकः परमेश्वरस्तस्यैवान्तर्याम्यादिसञ्ज्ञा। तदुक्तम्—

'विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ।
अन्तस्तिष्ठन् यमयति तेनान्तर्यामितां व्रजेत् ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ॥ इत्यादि ।

सूक्ष्मशरीराभिमानी सूत्रात्मा स एव हिरण्यगर्भ इत्यप्युच्यते । तदुक्तम्—

'सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः
सर्वाहंमानधारित्वात् क्रियाज्ञानादिशक्तिमान् ॥

प्रत्यूषे वा प्रदोषे वा मग्नो मन्दे तमस्ययम् ।
लोको भवति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥
सस्यं वा शाकजातं वा सर्वतोऽङ्कुरितं यथा ।
कोमलं तद्वदेवैष पेलवो जगदङ्कुरः' ॥ इत्यादि ।

स्थूलशरीराभिमानी विराट् स एव वैश्वानर इत्युच्यते । अस्य च विश्वरूपाध्यायादौ वर्णनं स्पष्टमेव । मायावच्छिन्नं चैतन्यमीश्वरो मयोपाधिकं त्वीश्वरसाक्षी । स च परमेश्वर एकोपि मायानिष्ठसत्त्वरजस्तमोगुणभेदेन विष्णुचतुर्मुखमहेश्वराभिधानतां प्राप्नोति ॥

जीवो नामान्तःकरणावच्छिन्नं चैतन्यमन्तःकरणोपाधिकं तु जीवसाक्षी । अन्तःकरणावच्छिन्नचैतन्यस्यैव जीवत्वेन लिङ्गशरीरादीनामपि जीवस्वरूप एव सङ्ग्रहस्तदुक्तम्—

'चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः ।
चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीव उच्यते' ॥ इति ॥

लिङ्गशरीराभिमानी जीवः प्राज्ञ इति तैजस इति व्यष्टिरिति चोच्यते । स्थूलशरीराभिमानी जीवो विश्व इत्युच्यते । जीवनिर्मितं द्वैतं द्विविधं शास्त्रीयमशास्त्रीयं च शास्त्रीयम्—ब्रह्मविचाराख्यम् । अशास्त्रीयं तद्भिन्नम् । तत्र शास्त्रीयं ग्राह्यमशास्त्रीयं त्याज्यम् ।

जीवस्य हि साधिष्ठानस्यैव ( कूटस्थचैतन्येन सहितस्यैव ) मोक्षादावधिकारो यदा जीवः कूटस्थसहितं चिदाभासोपेतं शरीरद्वयं स्वरूपत्वेन स्वीकरोति तदाहं संसारीत्यभिमन्यते । यदा पुनर्देहद्वयसहितस्य चिदाभासस्य तिरस्कारादधिष्ठानभूतकूटस्थस्वरूपत्वं जीवेन स्वीक्रियते तदाहं चिदात्माऽसंङ्गोऽस्मीति जानाति । असङ्गे प्राधान्येनाहंकृतेरभावेपि मात्रया सत्त्वं भवत्येव । त्रिविधस्तावदहंपदार्थः—एको मुख्यो द्वावमुख्यौ च । मुख्यस्तत्रान्योन्याध्यासेन चिदाभासकूटस्थावेकी भूतौ । अमुख्यौ च केवलश्चिदाभासः केवलः कूटस्थश्च । सप्तावस्थाश्च चिदाभासस्य भवन्ति तदुक्तम्—

अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः ।
अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा' ॥ इति ॥

यदुपनिषदर्थविचारात्पूर्वं स्वरूपं न वेत्ति तदज्ञानम् । कूटस्थो न भात्यऽत एव नास्तीत्यावृतिः । कर्तृत्वभोक्तृत्वादिरूपैश्चाभिघातो विक्षेपः । अस्ति भाति च कूटस्थ इति परोक्षधीः । कूटस्थ एवास्मीत्यपरोक्षधीः । कर्तृत्वभोक्तृत्वादिभावानां निरासः शोकमोक्षः । तदनन्तरं कृतकृत्यता प्राप्तप्राप्यता च तृप्तिरुच्यते । अज्ञानस्य परोक्षधिया बाधः । आवृतेश्चापरोक्षधिया बाधः । विक्षेपस्य शोकमोक्षेण बाधः । फलं च तृप्तिरेवेति विवेकः ।

मुक्तश्च द्विविधो–जीवन्मुक्तः परममुक्तश्च तत्र जीवन्मुक्तो यथा––

'बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ।
स एव मुक्त इत्येव वेदान्तेषु विनिश्चयः' ॥ इति ॥
'अद्वयानन्दरूपस्य सद्वयत्वं च दुःखिता ।
बन्धः प्रोक्तः, स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥
अविचारकृतो बन्धो विचारेण निवर्तते ।
तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत्' ॥ इति ॥

वस्तुतस्तु—

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' ॥ इति ॥

भगवतो या शक्तिः सैव मायेत्युच्यते सा किल न सद्रूपा परमात्मज्ञानेन बाध्यमानत्वात्; नाप्यसद्रूपा कार्यकारित्वात् । तमोरजःसत्त्वगुणा च सा । सा च माया द्विविधा-विशुद्धसत्त्वप्रधानाऽविशुद्धसत्त्वप्रधाना च । सत्त्वगुणप्राधान्यवती प्रथमा, तमोगुणप्राधान्यवती द्वितीया । शुद्धसत्त्वप्रधाना हि माया परमेश्वरस्य हरेर्दासी, अविशुद्धसत्त्वप्रधाना तु माया जीवस्य स्वामिनी–अविद्यापरतन्त्रत्वाज्जीवस्य ।

ईश्वरस्तमोगुणप्रधानमायया पृथिव्यप्तेजोवाय्वाकाशानि पञ्च सूक्ष्मभूतानि निर्माति । तेषु सूक्ष्मभूतेषु यः सत्त्वांशोस्ति तेन श्रोत्रत्वगक्षिरसनघ्राणाख्यानि पञ्च बुद्धीन्द्रियाणि संपादयति । तथाहि– आकाशसत्त्वाच्छ्रोत्रम्, वायुसत्त्वात्त्वक्, तेजः सत्त्वादाक्षि, जलसत्त्वा-

द्रसनम्, अवनिसत्त्वाद् घ्राणम्। मिलितैः किल तैरुक्तसत्त्वांशैरन्तः करणं। तदपि वृत्तिभेदाद्द्विधा-विमर्शवृत्त्या मनं इत्युच्यते, अध्यवसायवृत्त्या बुद्धिरित्युच्यते। सूक्ष्मपञ्चभूतरजोंशैः क्रमेण कर्मेन्द्रियाणि तनोति तथा हि-आकाशरजसो वाक्, वायुरजसः पाणिः, तेजोरजसः पादः, नीररजसः पायुः, पृथिवीरजस उपस्थः, पुनर्मिलितैस्तै रजोंशैः प्राणो जायते। स चापि प्राणापानसमानोदानव्यानभेदैः पञ्चविधो भवति तदुक्तम्

'हृदि प्राणो गुदेऽपानः सामानो नाभिमण्डले।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः'॥ इति॥

पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्चेति सप्तदशभिः सूक्ष्मशरीरमुच्यते। जीवकृतकर्मभोगाय भगवान् सूक्ष्मभूतानां पञ्चीकरणेन स्थूलभूतानि कल्पयति पञ्चीकरणं नाम

'द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥ इत्युक्तम्॥

पञ्चस्थूलभूतेभ्यो ब्रह्माण्डमुत्पद्यते तत्र च ब्रह्माण्डे चतुर्दश भुवनानि तथाहि-महातल-रसातला- ऽतल-सुतल-वितल-तलातल-पातालाख्यानि सप्त भूमेरधो भुवनानि। अष्टमी क्षमा या भूर्लोक इत्युच्यते तदूर्ध्वमन्तरिक्षलोकः स एव भुवर्लोकः, ततः स्वर्लोको यो महेन्द्रलोक इत्युच्यते, तदुपरि महर्लोको यः प्रजापतिलोकः, ततो जनलोकः, ततस्तपोलोकः, ततः सत्यलोकः, इति। षट् किल नरकभूमयः-महाकालाम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्रा इति यत्र मादृशपापजीवानां कर्माणि पच्यन्ते।

भूमेर्मध्ये चामीकरकृतः पर्वतराजः सुमेरुनामा यस्य रजतवैदूर्यस्फटिकहेममयानि चत्वारि शृङ्गाणि। तत्र राजतशृङ्गभागः पूर्वभागः, वैदूर्यशृङ्गभागो दक्षिणभागः, स्फटिकशृङ्गभागः पश्चिमभागः, हेमशृङ्गभाग उत्तरभाग इति। सुमेरोरुत्तरस्यां दिशि नीलपर्वतः श्वेतपर्वतः शृङ्गवत्पर्वत इति त्रयः पर्वताः सुमेरुलग्नास्तत्र नीलोत्तरप्रदेशे रमणकं नाम वर्षम्। श्वेतोत्तरभागे हिरण्मयं नाम वर्षम्। शृङ्गवदुत्तरे वर्षमुत्तराः कुरवः। सुमेरोर्दक्षिणस्यां दिशि निषधहेमकूटाहेमाल-

याभिधेयाः पर्वताः क्रमेण पूर्वकोटितः पश्चिमकोटिसंलग्नाः स्वोत्तरस्यां दिशि सुमेरुसंबद्धास्तेषां दक्षिणतः क्रमेण त्रीणि वर्षाणि-हरिवर्षकिंपुरुषभारताख्यानि। सुमेरोः पूर्वदिशि तत्संबद्धो माल्यवान् पर्वतस्तदग्रे भद्राश्वनामकमेकमेव वर्षम्। सुमेरोः पश्चिमादिशि तत्संबद्धो गन्धमादनपर्वतस्तदग्रे केतुमालनामकमेकमेव वर्षम्। एतेषां मध्य इलावृतं नाम वर्षम्। स एष नववर्षात्मको जम्बूद्वीप इति भाष्यते य एष क्षारोदधिना वलयीकृतः।

तदुपरि प्लक्षद्वीपो यत्र शिव-यवयस-सुभद्र-शान्त-क्षेमा-ऽमृता-ऽभयनामानि सप्त वर्षाणि। सप्त च तत्र शैला माणिकूट-वज्रकूटेन्द्रसेन-ज्योतिष्मत्-सुपर्ण-हिरण्यष्ठीव-मेघला इति। स च प्लक्षः स्वसमानेनेक्षुरसोदेनावृतः। तस्य च शाकद्वीप इति नामान्तरम्। ततः शाल्मलो द्वीपो यस्य कुशद्वीप इति नामान्तरम्। यत्र सुरोचन-सौमनस्य-रमणक-देववर्ष-पारिभद्रा-ऽऽप्यायना-ऽविज्ञातनामधेयानि वर्षाणि सप्त। सप्त च गिरयः स्वरस-शतशृङ्ग-वामदेव-कुन्द-मुकुन्द पुष्पवर्ष सहस्रश्रुतय इति। स च सरोदेन वलयीकृतः। तदुपरि क्रौञ्चद्वीपो यं कुशद्वीप इत्यपि वदन्ति। यत्र सुव-सुदान-दृढरुचि-नाभिगुप्त स्तुत्यव्रत-विविक्त-वामदेवसञ्ज्ञकानि सप्त वर्षाणि। सप्त चाचलाश्चक्र-चतुःशृङ्ग-कापिल-चित्रकूट-देवानीको-र्ध्वरोम-द्राविणा इति। एष घृतसमुद्रेण वेष्टितः। तदुपरि शाल्मलद्वीपो यस्य क्रौञ्चद्वीप इत्यपि नामान्तरम्। यत्र क्रौञ्चो नाम पर्वतराजः। सप्त च वर्षाणि आम-मधुरुह-मेघपृष्ठ-सुधाम-भ्राजिष्ठ-लोहितार्ण-वनस्पतिनामानि। सप्त च शिलोच्चयाः शुक्र- वर्धमान-भोजनो-पबर्हिण-नन्द-नन्दन-सर्वतोभद्रा इति। एष दधिमण्डोदाधिना समावृतः। तदग्रे गोमेधद्वीपो यं केपि शाकद्वीप इत्यपि वदन्ति। यत्र शाकोनाम महीरुहः स्वक्षेत्रव्यपदेशकः। यस्मिँश्च पुरोजव मनोजव-पवमान-धूम्रानीक-चित्ररेफ-बहुरूप-विश्वधाराख्यानि वर्षाणि सप्त। सप्त चात्र नगा ईशानो-रुश्टृङ्ग-बलभद्र-शतकेसर-सहस्रस्रोत-देवपाल-महानसा इति। एष क्षीरसागरसमावृतः। तदुपरि पुष्करद्वीपो यत्रैक एवाचलो मानसोत्तरनामा। अर्वाचीन-पराचीननाम्नी द्वे वर्षे। यत्र चतसृषु दिक्षु चत्वारि पुराणि लोक-

पालानामिन्द्रादीनाम्।-एष स्वादुनीराधिसमलङ्कृतः। तदुपरि लोकालोकनामा पर्वतराजः। तदग्रे काञ्चनमयी भूमिः। अल्पमिदमुक्तमुदाहरणमात्रम्। न खलु तर्कभूमिर्भगवतः सृष्टिः। सर्वमेतन्मायाविलसितं मायायां गगने खद्योत इवाभाति, सा मायापि भगवति तथैव।

संप्रति प्रकृतमनुसरणीयम्—अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्चकोशास्तत्र पञ्चीकृतभूतोत्थं स्थूलशरीरमन्नमयकोशः, पञ्च कर्मेन्द्रियैः सह पञ्चप्राणाः प्राणमयकोशः, पञ्चज्ञानेन्द्रियैः साकं मनो मनोमयकोशः, पञ्च ज्ञानेन्द्रियैः सार्धं बुद्धिर्विज्ञानमयकोशः, कारणशरीरे मोदप्रमोदानन्दाख्यैः वृत्तिभिः समं यन्मलिनसत्त्वं तदेवानन्दमयकोशः। तदुक्तम्।

'देहादभ्यन्तरं प्राणः प्राणादभ्यन्तरं मनः।
ततः कर्त्ता ततो भोक्ता गुहा सेयं परंपरा॥
अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्च ते।
कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत्॥
स्यात्पञ्चीकृतभूतोत्थो देहः स्थूलोऽन्नसञ्ज्ञकः।
लिङ्गंतु राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह।
सात्त्विकैर्धीन्द्रियैः साकं विमर्शात्मा मनोमयः।
तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका॥
कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः॥ इति॥

सत्त्वपदं मलिनसत्त्वपरत्वेन व्याख्यातम्। इष्टदर्शनजा सुखाकारा वृत्तिर्मोदवृत्तिः, इष्टलाभजन्या सुखवृत्तिः प्रमोदवृत्तिः, इष्टभोगजन्यं सुखमानन्दवृत्तिरुच्यते। त्रिविधं शरीरम्—स्थूलशरीर सूक्ष्मशरीरं कारणशरीरं च। अविद्यैव कारणशरीरमिति व्यपदिश्यते। त्रिविधाश्च ज्वराः—स्थूलशरीरे वातपित्तादिजन्याः, सूक्ष्मे कामक्रोधादयः, कारणशरीरेऽज्ञानादिसंस्कारा एव ज्वराः।

आकाशस्य शब्द एव गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य शब्दस्पर्शरूपरसाः, पृथिव्याः शब्दस्पर्शरूपरसगन्धा इति विशेषगुणविवेकः। न च पञ्चीकरणप्रक्रियास्वीकारादाकाशादावपि स्पर्शादिगुणोपलम्भः स्यादिति वाच्यम्, शब्दस्पर्शादितन्मा-

त्राणां पूर्वपूर्वतन्मात्रगुणानाभिभावकत्वेप्युत्तरोत्तरतन्मात्रगुणाभिभावकत्वादिति नियमेनाकाशे शब्दतन्मात्राया आधिक्यात्तयाऽभिभूतत्वात् स्पर्शादिगुणानां नोपलम्भः। वायौ तु यद्यपि शब्दतन्मात्राभागोस्त्येव तथापि तदपेक्षया स्पर्शतन्मात्राया अधिकतरत्वान्न शब्दतन्मात्रया स्पर्शस्याभिभवः। स्पर्शतन्मात्रायाः शब्दगुणानभिभावकत्वाद्वायौ शब्दगुणोपलम्भोस्त्येव। स्पर्शतन्मात्रया च रूपादीनामाभिभवान्न वायौ रूपादिगुणोपलब्धिरित्येवमग्रेप्यनुसंधेयम्।

तत्र शब्दः श्रोत्रग्राह्यः। स्पर्शस्त्वग्ग्राह्यः स च त्रिविधः शीतोष्णानुष्णाशीतभेदैस्तत्र शीतो जले,उष्णस्तेजसि, अनुष्णाशीतो वायुपृथिव्योः। चक्षुर्ग्राह्यं रूपं तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदैः सप्तविधम्। तत्र भास्वरशुक्लं तेजसि,अभास्वरशुक्लं जले,पृथिव्यां तु सप्तविधमेव। रसस्तु रसना ग्राह्यः स च मधुराम्ललवणकटुकषायतिक्तभेदैः षड्विधम्। पृथिवीजलयोरेव रसः। घ्राणग्राह्यो गन्धः स तु द्विविधः सुरभिरसुरभिश्च।

वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां तु यथाक्रममुक्तयादानगमनविसर्गानन्दाः पञ्च विषयाः क्रियाप्रधानाः। तानि चेन्द्रियाणि मुखादिगोलकेष्वासते। मनस्त्वन्तःकरणं दशानामेवेन्द्रियाणामध्यक्षं हृत्पद्मेस्थितमिन्द्रियार्पितविषयाणां गुणदोषविचारकम्। तस्य त्रिविधा वृत्तिर्गुणविशेषप्राधान्येन तथा हि—सत्त्ववृत्तौ वैराग्यक्षान्त्यौदार्यादयो भवन्ति रजोवृत्तौ कामक्रोधलोभादयस्तमोवृत्तावालस्यभ्रान्तितन्द्राद्याः।

वृत्तयस्तु स्वविषयमात्रावभासिका एव वृत्त्यवभासकस्तु चिदाभासस्तस्याप्यवभासकं ब्रह्मचैतन्यम्। अयमभिप्रायः—घटेन नेत्रसंयोगे जातेन्तःकरणस्य घटाकारा वृत्तिर्भवति तस्याः प्रकाशश्चिदाभासेन तस्यापि प्रकाशो ब्रह्मचैतन्येनेति। तासां वृत्तीनां सुषुप्तिमूर्च्छासमाधिप्रलयमोक्षेषु विलयो भवति। पुनरपि द्विविधा वृत्तिरन्तर्मुखा बहिर्मुखा च। तदुक्तम्।

'अन्तर्मुखाहमित्येषा वृत्तिः कर्त्तारमुल्लिखेत्।
बहिर्मुखेदमित्येषा बाह्यं वस्त्विदमुल्लिखेत्॥

इदमो ये विशेषाः स्युर्गन्धरूपरसादयः।
असाङ्कर्येण तान् भिन्द्याद् घ्राणादीन्द्रियपञ्चकम्' ॥ इति ॥

पुनरपि द्विविधा वृत्तयो ज्ञानवृत्तयोऽज्ञानवृत्तयश्च जाग्रत्कालिका ज्ञानवृत्तयः सुषुप्तिकालिका अज्ञानवृत्तयः। तदुक्तम्—

'अज्ञानवृत्तयः सूक्ष्माः विस्पष्टा बुद्धिवृत्तयः।
इति वेदान्तसिद्धान्तपारगाः प्रवदन्ति हि ॥
अन्तर्मुखो य आनन्दमयो ब्रह्मसुखं तदा। (निद्रायाम्)
भुङ्क्ते चिद्बिम्बयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः' ॥

विज्ञानमय एव सुषुप्तौ बुद्धिवृत्तिविरहित आनन्दमय इत्युच्यते। स एव सुषुप्तौ भोक्ता भोग्यं च ब्रह्मसुखम्। तदुक्तम्—

'आनन्दमयभोक्तृत्वं ब्रह्मानन्दे च भोग्यता'। इति।

चतुर्विधं वस्तु—शेषी शेष उपेक्ष्यं द्वेष्यं च तत्र शेष्यात्मा शेषो देहधनादिरुपेक्ष्यं मार्गतृणादिकमनीप्सितमिति यावत्। द्वेष्यं व्याघ्रसर्पादिकं प्रतिकूलमिति यावत्। एतत्सर्वं वस्तु जातं जगद् ब्रह्मण्येव स्थितं तदुक्तम्—

फलपत्रलतापुष्पशाखाविटपमूलवान्।
ननु बीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥
क चित् काश्चित् कदा चिच्च तस्मादुद्यान्ति शक्तयः।
देशकालविचित्रत्वात् क्ष्मातलादिव शक्तयः' ॥ इति ॥

अनिर्वचनीयं चैतद् जगत्तदुक्तम्—

'स घटो न मृदोभिन्नो वियोगे सत्यनीक्षणात्।
नाप्यभिन्नः पुरा पिण्डदशायामनवेक्षणात् ॥
अतोऽनिर्वचनीयोयं शक्तिवत्तेन शक्तिजः।
अव्यक्तत्वे शक्तिरुक्ता व्यक्तत्वे घटनामभृत्' ॥ इति ॥

जगन्निर्माणानुकूला ब्रह्मस्था शक्तिर्मायैव सैव नामरूपतां प्राप्ता प्रपञ्च इत्युच्यते तदुक्तम्—

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्' ॥ इति।

सर्वं चैतज्जगन्मिथ्या ब्रह्मज्ञानेन बाध्यत्वात् तदुक्तम्—

'एवं मायामयत्वेन विकारस्यानृतात्मताम्।
विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः॥
इयं संसाररचना विचारोज्झितचेतसाम्।
बालकाख्यायिकेवेत्थमवास्थितिमुपागता'॥ इति॥

यथा बालकं प्रत्युच्यमानाख्यायिका मिथ्याप्यवस्थितिं सत्त्वाकारतां प्रयात्येवमियं संसाररचना मिथ्यापि विचारहीनमनसां दृष्ट्या सत्यतामाप्नोति वस्तुतो मिथ्यैव, तथैव श्रूयते—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति। सर्वं चैतत् कालत्रयेऽपि दुःखदमेव मात्रयापि परमार्थसुखतां नानुवर्तते तदुक्तम्—

'अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम्।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते॥
जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता।
उपनीतेऽप्यऽविद्यत्वमनुद्वाहश्च पण्डिते॥
यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः।
पित्रोर्दुःखस्य नास्त्यन्तोऽधनी चेन्म्रियते तदा'॥ इति।

एवं सर्वेष्वेव विषयेषूह्यम्। एतदालोच्यैवोक्तं भगवता पतञ्जलिनापि— 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेवसर्वं विवेकिनः' इति। तस्मात्—

दशकण्ठविमर्दनपादमये भवतापनिवारणमुक्तिकृतम्।
भज भक्तिनिबद्धहृदा सततं शृणु मे कथनं निगमादिमतम्॥१॥
मतमतान्तरपक्षनिराग्रहं लघुगुरू स्वपरौ हृदि संश्रयन्।
जपतु नाम हरेरनिशं ततो यत इतो नहि शुक्लतरा सृतिः॥२॥

इति निवेद्यते।

॥ इति॥

## पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीता
## अद्वैतचन्द्रिका समाप्ता॥

॥ श्रीः ॥

# ॥ शिवाष्टपदी ॥

भज विषमविलोचनवेशम् ।

चन्द्रकिरणसमशुभ्रसुदर्शनशैलनितम्बनिवेशम् । ध्रु ।
निटिलविलोचनलोचनतः कृतभस्मशरीररतीशम् ।
हिमनिधिसानुसमाधिसमाश्रितचक्रधरं धरणीशम् ॥१॥
यामवतीपतिपूर्वकलापरिकलितविशाललाटम् ।
हैमवतीपरिरम्भपवित्रितचित्रितवत्सकपाटम् ॥ २ ॥
व्यालवलयकमनीयकरम्बितभूषितहस्तसरोजम् ।
शैलसुतावदनेन्दुविलोचनचञ्चलहृदयमनोजम् ॥ ३ ॥
विष्णुपदीपरिभोगपरिष्कृततुङ्गकपर्दकतल्पम् ।
गानकलाकुतुकेन नवीकृतताण्डवकल्पमनल्पनम् ॥४॥
भक्तजननमरणादिमहास्रवमोचनकौशलवेषम् ।
त्रिभुवनमण्डलमण्डनपण्डितवन्दितपादविशेषम् ५
विष्णुमतीयतृतीयविचक्षणवल्लभवादनिदानम् ।
चाटुकथाचातुर्य्यनिकृन्तितगिरिजामानसमानम् ॥ ६ ॥
संहृतसागरमथनविनिस्सृतदारुणदारदशोकम् ।
मन्मथविशिखभुजङ्गविषाहतिसंहृतिसमवितलोकम् ७
गीतमिदं हरहर्षकरं किल मुदयतु पुररिपुदासम् ।
अष्टपदीनिपुणाय पिनाकी वितरतु निजपदवासम् ॥८॥

पञ्चनदीयपण्डितसुदर्शनाचार्य्यः ।

॥ श्रीः ॥

# अद्वैतचन्द्रिकायाः शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् । | शुद्धम् । | पृ० | पं० | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|---|---|---|---|
| २ | २१ | कत्त्वं | कत्वं | ४४ | १४ | संसृति | संसृतिं |
| ११ | २९ | सुत्र | सूत्र | ४४ | २५ | कारणा | कारण |
| १३ | ७ | पार्थिब | पार्थिव | ४५ | ६ | द्वायौ | द्वायौ |
| २२ | २६ | मान | मानस | ४५ | १२ | ब्यां | ब्यां |
| ३२ | २२ | योगता | योग्यता | ४५ | २० | दयों | दयो |

॥ अन्यद्रक्ष्यमाणमुद्रणाशुद्धिषु क्षमैवाभ्यर्थ्यते ॥

इति ।

## स्वनिर्मितमुद्रितपुस्तकानां सूचनिका ।

| मूल्यम् | पुस्तकनाम | पुस्तकप्राप्तिस्थानम् |
|---|---|---|
| ।) | श्रीआलवार चरितामृत | वेंकटेश्वर प्रेस मुंबई । |
| -)॥ | स्त्रीचर्या | |
| =) | श्रीरङ्गदेशिकशतकम् | पंडितसुदर्शनाचार्य ब्रह्माघाट बनारस सिटी |
| ≠) | संस्कृतभाषा | |
| १) | विशिष्टाद्वैताधिकरणमाला | हरिदासगुप्त चौखंभासंस्कृत-पुस्तकालय बनारस सिटी |
| ।≠) | एषा अद्वैतचन्द्रिका | |

